# उणादिसूत्रवृत्तिः ।





महामहोपाध्याय श्रीमदुज्ज्वल दत्त विरचिता ।

वि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

संस्कृता ।

# UJJALA DATTA'S

## COMMENTARY ON THE UNADISUTRAS

EDITED BY

*PANDIT JIBANANDA VIDYASAGARA B. A.*

calcutta.

PRINTED AT THE GANESA PRESS

1873

ओं

श्रीगणेशाय नमः।

हेरम्बमीश्वरं वाचं नमस्कृत्य पदं गुरोः।
श्रीमदुज्ज्वलदत्तेन क्रियते वृत्तिरुत्तमा॥ १॥
वृत्तिं न्यासमनुन्यासं रचितं भागवृत्तिकाम्।
भाष्यं धातुप्रदीपञ्च तट्टीकां वर्णदेशनाम्॥ २॥
उपाध्यायस्य सर्वस्वं सुभूतिं सौमनन्दिनम्।
कलिङ्गवृत्तचन्द्रादीन् समीक्ष्यैषा कृतिर्मम॥ ३॥
उणादिवृत्तयोऽनेका भूरिभिः सूरिभिः कृताः।
तास्त्विदानीं विपर्यस्ताः सूत्रशब्दार्थधातवः॥ ४॥
ता एवाथ समालोच्य ग्रन्थानन्यांश्च विस्तरात्।
सर्वतः सारमाकृष्य मया वृत्तिर्विरच्यते॥ ५॥
निरूप्य लिखितं सत्यं सज्जनैः सुविचारितम्।
नमस्कुर्मः खला युष्मांस्तूष्णीमत्र करिष्यथ॥ ६॥
योऽमूं वृत्तिं समालोच्य स्वपौरुषसमीहया।
मन्नामाच्छादनं कुर्यात्सुकृतं तस्य नश्यति॥ ७॥
प्रत्ययानाञ्च धातूनामागमादेशयोस्तथा।
व्यक्तमेवानुबन्धानां फलं नोदीरितं ततः॥ ८॥

प्रत्ययः । परश्च । आद्युदात्तश्च । अनुदात्तौ सुप्पितौ । पा० ३, १, १—४, । धातोः । तत्रोपपदं सप्तमीस्थम् । कृदतिङ् । वासरूपो ऽ स्त्रियाम् । पा० ३, १, ९१—९४, वर्त्तमाने लट् । पा० ३, २, १२३, । पुवः सञ्ज्ञायाम् । पा० ३,२,१८५, उणादयो बहुलम् । भूतेऽपि दृश्यन्ते । भविष्यति गम्यादयः । पा० ३, ३, १—३, । कर्त्तरि कृत् । पा० ३, ४, ६७, । दाश-गोघ्नौ सम्प्रदाने । भीमादयोऽपादाने । ताभ्यामन्यत्रोणा-दयः । पा० ३, ४, ७३—७५, ॥

एषा सप्तदशसूत्री पञ्चमपादपरिसमाप्तेरनुवर्त्तते । ततो वक्ष्यमाणाः सपादशतत्रयमुणादयः प्रत्ययाः साधवो भवन्ति । तान्वक्तुकामोऽहमस्मि ॥

## कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ १ ॥

डुकृञ् करणे । वा गतिगन्धनयोः । पा पाने । जि अभि-भवे । डुमिञ् प्रक्षेपणे । ष्वद आस्वादने । साध संसिद्धौ । अशू व्याप्तौ ॥ एभ्योऽष्टधातुभ्य उण्प्रत्ययः स्यात् । करोतीति कारुः । प्रसिद्धोऽसौ क्रियाशब्दः शिल्पिन्यपि च वर्त्तते । तथा च धरणिकोशः । कारुः शिल्पिनि कारके । राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः । सर्ववानरसेनानामाश्वागमनमादि-शत् । ७, २८, । इति भट्टिः । स्त्रियामूङ्तः । कारूःस्त्री ॥ वातीति वायुर्वातः । आतो युक् चिण्कृतोः । पा० ७, ३, ३३, । इति युक् । उभयत्र वायोः प्रतिषेधो वक्तव्यः । पा० ६, ३, २६, १, । इति देवताद्वन्द्वे च । पा० ६, ३, २६

इत्यानङ् न भवति । वाय्वग्नी । अग्निवायू ॥ पिवत्यनेनौषधमिति पायुर्गुदस्थानम् । गुदं त्वपानं पायुर्नेत्यमरः ॥ जयत्यभिभवति रोगानिति जायुरौषधं वैद्योऽपि ॥ मिनोति प्रक्षिपति देह उष्माणमिति मायुः पित्तम् । मायुः पित्तं कफः श्लेष्मेत्यमरः । गोपूर्वात् गां वाचं विकृतां मिनोति प्रक्षिपतीति गोमायुः शृगालः ॥ स्वद्यत इति स्वादु मिष्टम् । त्रिलिङ्गः । शीघ्रद्रव्येऽसत्त्वे क्लीवम् । क्लीवे शीघ्राद्यसत्त्वे स्यात् । १, १, १, ६३, । इत्यमरस्त्रिलिङ्गे । पृथ्वादिभ्य इमनिच् । पा° ५, १, १२२, । स्वादिमा । स्त्रियां ङीष् । स्वाद्वीत्यपि॥ साध्नोति परकार्यमिति साधुःसज्जनः । स्त्रियां वोतो गुणवचनात् । पा° ४, १, ४४, । इति ङीष् । साध्वी सती पतिव्रता । अम° २, ६, १, ६, । पृथ्वादित्वात्साधिमा ॥ अश्नुत इत्याशु शीघ्रं धान्यस्य च नाम । पृथ्वादित्वादाशिमा । धान्यवाचित्वे पुंसि । आशुर्व्रीहिः पाटलः । अम° २, ९, १५, ॥ बहुलवचनात् रह त्यागे । ष्णा शौचे । कक लौल्ये । हल विलेखने । वस निवासे । एभ्यो ऽप्युण् भवति ॥ गृहीत्वा रहति त्यजति चन्द्रमिति राहुः स्वर्भानुः ॥ स्नात्यङ्गमिति स्नायुः शरीरबन्धः । स्नायुः स्त्री वस्नसा स्मृतेत्यमरः ॥ कक्यतेऽनेनेति काकुः । काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरित्यमरः ॥ हल्यतेऽनेनेति हालुर्दन्तः ॥ सर्वोऽत्र वसति सर्वत्रासौ वसति । अत्रार्थे वासुः । वासुश्चासौ देवश्चेति वासुदेवः । तथा च स्मृतिः । सर्वत्रासौ समस्तं च वास-

त्यत्रेति वै यतः । ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते ॥ १ ॥ सर्वत्रासौ वसत्यात्मरूपेण विश्वभरत्वादिति वासुः। वासुर्नारायणपुनर्वसुविश्वरूपाः । १,१,२९ । इति त्रिकाण्डशेषे । वसुदेवस्यापत्यमित्यस्मिन्नर्थे ऋष्यन्धकवृष्णिकुरुभ्यश्च। पा° ४,१,११४ । इत्यणि कृते वासुदेव इत्यपि व्युत्पत्त्यन्तरम् ॥

छन्दसीणः ॥ २ ॥

इण् गतौ ॥ अस्मादुण्प्रत्ययः स्याच्छन्दसि विषये । एतीत्यायुः । आयुर्जीवितकालो ना स्यादिति क्षत्रियवर्गेऽमरः । बहुलवचनाद्भाषायामपि प्रयुज्यते । जटा आयुरस्येति समासे जटायुः पक्षिराजः । जटायुः स्याद्विहगेन्द्रो जटायुररुणात्मज इति शब्दार्णवः । मा वधिष्ठा जटायुं माम् । ६,४१। इति भट्टिः वायुना जगदायुनेति वर्णविवेकः । तटीं विन्ध्यस्याद्रेरभजत जटायोः प्रथमज इति विन्ध्यवर्णनेऽभिनन्दः एतेर्णिच्च । २, ११८ । इत्युस्प्रत्यये सकारान्तोऽप्यायुःशब्दो भवति ॥

दॄसनिजनिचरिचटिभ्यो ञुण् ॥ ३ ॥

दॄ विदारणे । षणु दाने । जन जनने । चर गतौ । चट भेदने ॥ एभ्यो ञुण् स्यात् । दीर्यत इति दारु क्लीबे काष्ठम् । अर्धर्चादिः । देवदारुः पुंसि । अमुं पुरः पश्यसि देवदारुम् । २, ३६ । इति रघुः । नपुंसके दारु । दारुणी । दारूणि । काष्ठं दार्विन्धनं त्वेध इत्यमरः ॥ सनोति सनुते वा । सानुः पर्वतैकदेशः । सानुः शृङ्गे बुधे मार्गे वात्यायां पल्लवे वने ।

नान्त° १९,। इति विश्वः। पर्वतैकदेशे स्नु: प्रस्थः सानुरस्त्रियामिति क्वचित्॥ जायन्ते जनयन्ति वा। जानुजङ्घोपरिभागः। क्लीबे जानु। जानुनी। जानूनि। जानूरुपर्वाष्ठीवदस्त्रियामित्यमरः। प्रसंभ्यां जानुनोर्ज्ञुः। पा° ५, ४, १२९। प्रज्ञुः प्रगतजानुकः संज्ञुः संहतजानुक इत्यमरः। ऊर्ध्वाद्विभाषा। पा° ५, ४,१३०। ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्। ञ्यनुबन्धकग्रहणं जान्वित्यत्र जनिवध्योश्च। पा° ७,३, ३५। इत्यनेन वृद्धिप्रतिषेधो मा भूत्॥ चरति चक्षुरादिष्विति चारु शोभनम्॥ चाटु प्रियं वाक्यम्। चाटुर्नरि प्रियोक्तिः स्यादिति रत्नमालाकोशः। चकर च बहु चाटून्प्रौढयोषिद्वदस्य। ११,२९। इति माघः। माघे नपुंसकमपि दर्शितम्। चाटु चाकृतकसंभ्रममासां कार्मणत्वमगमन्रमणेषु। १०, ३७। चाटुः पिचिण्डे च लुतौ चाटुरालापे तल्लजमित्युत्पलिनीकोशः। मृगय्वादित्वात्कुप्रत्यये चटुवित्यपि भवति। चटु चाटु प्रियं वाक्यमिति हेमचन्द्रः। वत्सेनोदस्यमानो रचितचटुशतं मोचितः स्वर्गिवर्गैरिति बालरामायणञ्च॥

किञ्जरयोः श्रिणः॥ ४॥

शॄ हिंसायाम्। इण् गतौ॥ आभ्यां किञ्जरादित्यनयोरुपपदयोर्यथासंख्यं ञुण् स्यात्। किं शृणातीति किंशारुः शरो धान्यशूकश्च। किंशारुः सस्यशूकं स्यात्किंशारुर्विशिखो मतः। धरणि°॥ जरामेतीति जरायुर्गर्भाशयः। गर्भाशयो जरायुः स्यादित्यमरः॥

त्रो रश्च लः ॥ ५ ॥

तॄ प्लवनतरणयोः ॥ अतो ञुण् स्याद्रेफस्य च लत्वम्। तरन्त्यनेन वर्णाइति तालु वदनैकदेशः तालुक्लीवे मुखोपरिभागः। परिशुष्कतालवः। तालु। तालुनी। तालूनि। तालु काकुदमित्यमरः। शरीरावयवाद्यत्। पा॰ ५,१, ६। तालव्यम्। तृसन्यादिसूत्रे तलिग्रहणे कर्त्तव्ये सूत्रमिदमन्यतोऽप्यृकारान्ताज्ज्ञापनार्थम् ॥ बाहुलकात्तृ गतौ। भृ भर्त्सने। शृ हिंसायाम्। मृ प्राणत्यागे ॥ एभ्योऽपि ञुण् भवति रेफस्य लत्वञ्च। आलुर्घटो भक्ष्यद्रव्यञ्च ॥ भृणाति भर्त्सयति रोगानिति भालुरादित्यः ॥ शालुः कषायद्रव्यम् ॥ मालुः पत्रलता ॥

कृके वचः कश्च ॥ ६ ॥

वच परिभाषणे ॥ अस्मात्कृकशब्द उपपदे ञुण् कश्चान्तादेशः। गलतालुकण्ठनाभयः कृकशब्दार्थाः। कृकेन गलेन वक्तीति कृकवाकुः। कृकवाकुः कुक्कुटे स्यात्कृकलासमयूरयोः ॥

भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ॥ ७ ॥

भृञ् भरणे। मृङ् प्राणत्यागे। शीङ् स्वप्ने। तॄ प्लवनतरणयोः। चर गतौ। त्सर छद्मगतौ। तनु विस्तारे। धन धान्ये। डुमिञ् प्रक्षेपणे टुमस्जो शुद्धौ ॥ एभ्यो दशधातुभ्य उः स्यात्। भरति बिभर्त्ति वेति भरुः स्वामी ॥ म्रियन्ते भूतान्यस्मिन्निति मरुर्निर्जलो देशः। मरुः पर्वतधन्वनो रेफा-

त्तेऽमरः ॥ शयनशीलः शयुरजगरः । शयुर्वाहसोऽजगरः स्यात् ॥ तरन्ति नरकमनेन रोपका इति तरुवृंक्षः ॥ चरुर्मन्त्रपूतः पाकः ॥ त्सरुः खड्गादिमुष्टिः स्यात् ॥ तन्यते कर्मपाशोऽनयेति तनुः शरीरं स्वल्पञ्च। स्त्रियां मूर्त्तिस्तनुस्तनूरित्यमरः । पृथ्वादित्वात्तनिमा ॥ धन्यते हन्यतेऽनेनेति धनुः शास्त्रम् । धनुना च धनुर्विदुः। शब्दभेद १, २४। इति विश्वप्रकाशः। धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यतीति धान्वन्तरम् ॥ सु शब्दं मिनोति प्रक्षिपतीति मयुः किन्नरः। किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुरित्यमरः। बाहुलकादत्र मीनातिमिनोतिदीङां ल्यपि च। पा० ६,१, ५०। इत्यात्वं न भवति॥ भक्षार्थं पानीये मज्जतीति मद्गुः पानीयकाकिकाभिधः पक्षी। न्यंक्वादित्वाज्जकारस्य गकारः। झलां जश झशि। पा० ८, ४ ५३। इति सस्य दः॥ बाहुलकात् गडि वदनैकदेशे। अतोऽप्युः स्यात्। तस्य च पक्षे दीर्घत्वम्। गण्डुर्गण्डूरुपधानं तैलं वा॥ क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति। पा०२, १,३२,१, गण्डुर्गण्डूश्च दृश्यत इत्युत्पलिनीकोशः॥

अणश्च॥ ८॥

अण शब्दार्थः॥ अत उप्रत्ययः स्यात्। अणुः सूक्ष्मः। पुंसि लवलेशकणाणव इत्यमरकोशः। पुंसीति वचनात्

पुंस्त्वमस्य। परमश्चासावणुश्चेति परमाणुः। कन्प्रत्यये ऽणुकः। अणोर्निपुणे कन्॥

चकारात् बाहुलकाद्वा—

(कटिवटिभ्याञ्च॥ ९॥)

कटति रसनामिति कटु रसविशेषः स्यात्। त्रिलिङ्गः॥ वटुर्द्विजसुतः स्मृत इति संसारावर्त्तः। उपचारान्नटवटुः। केचिदिदं सूत्रद्वयं धान्ये निदित्यत्र पठन्ति॥

धान्ये नित्॥ १०॥

धान्ये वाच्ये ऽण उप्रत्ययः स्यात् स च निद्भवति। अणुर्व्रीहिभेदः। व्रीहिभेदस्त्वणुः पुमानित्यमरः। निद्-ग्रहणमिदं स्वरार्थं फलिपाटि। १,१८,। इत्यादिसूत्रं यावदनुवर्त्तत इति वोतो गुणवचनादित्यत्र सूत्रे न्यासः॥

शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च॥११॥

शॄ हिंसायाम्। स्वृ शब्दोपतापयोः। ष्णिह प्रीतौ। त्रपूष् लज्जायाम्। असु क्षेपणे। वस निवासे। हन हिंसागत्योः। क्लिद आर्द्रीभावे। बन्धः बन्धने। मन ज्ञाने॥ एभ्यो दशधातुभ्य उप्रत्ययः स्यात् स च नित्। शरुरायुधकोपयोः॥ स्वर्य्यन्ते प्राणिनोऽनेनेति स्वरुर्वज्रम्। स्नेहुर्व्याधिः। अग्निं दृष्ट्वा त्रपते लज्जत इति त्रपु सीसकम्। क्लीवे रङ्गसीसकयोस्त्रपु॥ पुंसि भूम्न्यसवः प्राणा इत्यमरः। असु मानसोपतापे। कण्ड्वादित्वाद्यक्। असूयति देव-दत्ताय। वसू रत्नाग्निदेवेषु। प्रज्ञादित्वादणि स्वार्थे

वासवः। विश्वस्य वसुराटोः। पा०६,३,१२८,। इति दीर्घः। विश्वावसुर्मनुः॥ हनुर्हट्टविलासिनीत्यमरः। हनुः पुमान् पुरी गण्डादिति वररुचिकोशः। हनुः प्रहरणे मृत्यौ कपोलावयवे गद इत्यपि स एव। निन्दायां मतुप्। हनुमान् हनुमतापि न च निर्ययावविति कुमारिलः। अरा दीनाञ्च। पा०६,३,१२०,। इति दीर्घत्वमिति केचित्। हनूमान्। हनूमन्तं दन्तैर्दशति कुपितो राक्षसगण इति वृहत्प्रयोगः॥ क्लिद्यति विरहेण इति क्लेदुश्चन्द्रः॥ स्नेहेन बध्नातीति बन्धुः सज्जनः। प्रज्ञादित्वात्। पा०५,४,३८,। बान्धवः॥ मनू राजा। स्त्रियां मनोरौ वा। पा०४,१,३८,। इति ङीप्। उकारस्यौकारैकारौ च। मनोः स्त्री मनावी मनायी मनुः॥ चकारादिदि अवयवे। अत उप्रत्ययः। विन्दुः परिमाणं जलादिकणश्च॥

## स्यन्देः संप्रसारणं धश्च॥ ११॥

स्यन्दू प्रस्रवणे। अत उः स्यात् संप्रसारणञ्च धातोर्धकारश्चान्तादेशः। सिन्धुर्नाब्धौ नदे देशे सिन्धुस्तु सरिति स्त्रियामित्यमरः॥

## उन्देरिच्चादेः॥ १२॥

उन्दी क्लेदने॥ अत उः स्यादादेरुकारस्येकारादेशः। इन्दुः कुमुदबान्धवः॥ अन्वर्थबलादेव पर्वसूत्रे सनुमकसिद्धिग्रहणमस्मिंश्चेन्दि ग्रहणं कृतम्।

ईषेः किच्च ॥ १४ ॥

ईष गतिहिंसादानेषु । अत उः स्यात्स च कित् । आदेरिकारादेशः । ईषते हिनस्ति गच्छति वा । इषुः शरः । इषुर्द्वयोरित्यमरः ॥

स्कन्देः सलोपश्च ॥ १५ ॥

स्कन्दिर् गतिशोषणयोः । अत उः स्यात्सलोपश्च धातोः । कन्दुः स्वेदनीत्यमरः । कन्दुर्वा नरि पिष्टपाक इत्यमरः । यावादिषु कुमारक्रीड़नकात् । पा० ५,४,२९, । इति वचनात् कन् प्रत्ययः । कन्दुकः । सा कन्दुकैः कृत्रिमपुत्रकैश्च । कु० स० १,२९, इति कालिदासः ।

सृजेरसुश्च ॥ १६ ॥

सृज विसर्गे ॥ अत उः स्याद्धातोरसुगागमश्च धातुसकारलोपश्च । आगमसकारस्य जस्त्वम् । दकारः । तस्यापि चुत्वम् । जकारः । रज्जुर्गुणः । क्रियासङ्गः । रज्जूद्धृतमुदकम् । रज्जुः स्त्रियामित्यमरः ॥

कृतेराद्यन्तविपर्ययश्च ॥ १७ ॥

कृती छेदने ॥ अत उः स्यादाद्यन्तविपर्ययश्च । आदौ तकारोऽन्ते ककारः । तर्कुः स्त्रीणां कर्त्तनद्रव्यम् । तर्कुटी सूत्रला तर्कुः । २१२ । इति हारावलीकोशः ॥

नावञ्चेः ॥ १८ ॥

अञ्चु गतौ ॥ अतो निशब्द उपपद उः स्यात् । न्यङ्क्वादित्वात्कुत्वम् । जातिः । प्राणिरजतादिभ्योऽञ् । न्यङ्कुः

पा° ४,३,१५४,। इति विकारेऽञि नैयङ्कवं चर्म। आपिशलिस्तु न्यङ्कोर्नैच्भावं शास्ति। न्याङ्कवं चर्म॥

फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च॥१९॥

फल निष्पत्तौ। पट गतौ ख्यन्तः। णमु प्रह्वत्वे। मन ज्ञाने। जनी प्रादुर्भावे॥ एभ्य उः स्यात्। एषाञ्च यथाक्रम गुगागमपटिनाकिधतश्चत्वार आदेशा भवन्ति। फल्गु असारम्। क्लीबे फल्गुनी। फल्गूनि फलानि॥ पाटयतीति पटुर्वाग्मी विशारदः। स्त्रियां पट्वी। वोतो गुणवचनादिति ङीष्। क्लीबे पटु। पटुनी। पटूनि॥ नाकुर्वल्मीकः॥ मधुश्चैत्रे च दैत्ये च मद्ये पुष्परसे मध्विति हट्टचन्द्रः। मधुरर्धर्चादिः। मधुश्चैत्रो मधुर्दैत्यो मधूकोऽपि मधुर्मतः। मधु मद्यं मधु चौद्रं मधु पुष्परसं विदुरिति विश्वः॥ भिन्नस्य संग्रहाय त इति। जतु लाचा कल्कद्रव्यञ्च। त्रपुजतुनोः षुक्। पा°४,३,१३८,। जातुषमाभरणम्॥

वलेर्गुक्च॥ २०॥

वल प्राणने॥ अत उप्रत्ययो गुगामश्च धातोः। वल्गु शोभनम्॥

शः कित्सन्वच्च॥ २१॥

शो तनूकरणे॥ अत उप्रत्ययः स च किद्भवति सन्वद्भावश्चास्य। शिशुर्बालः। आदेच उपदेशेऽशितीति। पा° ६,१,४५,। इत्यात्वम्। आतो लोप इटि च। पा° ६,४,६४,। इत्याकारलोपः। इगन्ताच्च लघुपूर्वात्। पा° ५,२,

१३१,। इत्यण्। शैशवम्। शैशवेऽभ्यस्तविद्यानाम्। १,८,। इति रघुः॥

यो द्वे च॥ २२॥

५ या प्रापणे॥ अत उप्रत्ययः। स च कित् द्वित्वञ्च धातोः। ययुरश्वो ऽश्वमेधीयः। सन्वदिति प्रकृते द्विग्रहण-मित्त्वनिवृत्त्यर्थम्॥

कुर्भश्च॥ २३॥

भृञ् भरणे॥ अतः कुप्रत्ययो द्वित्वञ्च धातोः। बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलाविति धरणिः। आल-प्यालमिदं बभ्रोर्यत्स दारानपाहरत्। कथापि खलु पा-पानामलमश्रेयसे यतः। २,४०,। इति माघः। लोमादि-त्वात् बभ्रुशः॥ प्राक्प्रत्ययनिर्देशादन्यतो ऽपि भवति। चक्रुः कर्त्ता। जघ्नुर्हन्ता। पपुः पालकः॥

पृभिदिव्यधिगृधिधृषिदृशिभ्यः॥ २४॥

पृ पालनपूरणयोः। भिदिर्विदारणे। व्यध ताडने। गृधु अभिकाङ्क्षायाम्। ञिधृषा प्रागल्भ्ये॥ एभ्यः कुः स्यात्। उत्तरपरत्वे। पुरुर्भूरिपरागयोरिति धरणिः। पुरुरसुरविशेषोऽपीत्यमरटीकायाम्। अत एव पुरुणोपहूतः पुरुहूतः। पुरु दृष्टवान् पुरुदंसाः। उदोष्ठ्यपूर्वस्य। पा० ७,१,१०२,। इत्युत्वम्। उरण् रपरः। पा० १,१,५१,। इति रपरत्वम्। इन्द्रस्य नामद्वयम् भिनत्तीति भिदुर्वज्रम्॥ व्यधेः संप्रसारणञ्च। विरहिणं विध्यतीति विधुश्चन्द्रः।

विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे । धान्त० १३, । इति विश्वप्रकाशः । विधुश्चन्द्रे च विष्णौ च । विध्वरुषो स्तुदः । पा० ३, २, ३५, । इति खश् । विधुन्तुदो राहुः ॥ गृधुः कामः ॥ धृषुर्दक्षः ॥

कृग्रोरुच्च ॥ २५ ॥

डुकृञ् करणे । गॄ निगरणे ॥ आभ्यां कुः स्यादुच्चान्तादेशः । कुरुस्तूत्तरराजो देशभेदश्च । कुरुक्षेत्रम् । कुर्वादिभ्यो ण्यः । पा० ४,१,१५१, । कौरव्यः ॥ गुरुस्तातवृहस्पत्योः । गुरुर्निषेकादिकारे पित्रादौ सुरमन्त्रिणि । विश्वको० रान्ते ७८, । इति च । पृथ्वादित्वादिमनिच् । प्रियस्थिरेत्यादिना । पा० ६,४,१५७ । गरादेशः । गरिमा । खुराहतो यत्सदृशं गरिम्णः । ३, २८ । इति माघः ॥

अपदुःसुषु स्थः ॥ २६ ॥

तिष्ठतेरप दुः सु इत्येतेषूपपदेषु कुः स्यात् । सुषामादित्वात्षत्वम् । अपष्ठुर्वामः प्रतिकूलश्च ॥ दुष्ठुरविनीतः ॥ सुष्ठु शोभनम् । उद्गात्रादित्वादञि सौष्ठवं दौष्ठवमिति । एषां त्रयाणां मृगय्वादिपाठेन सिद्धत्वात् सूत्रमिदं न्यासकारस्यासम्मतमिति । सुषामादिषु चेत्यत्र रचितः ॥

रपेरिच्चोपधायाः ॥ २७ ॥

रप लप जल्प व्यक्तायां वाचि ॥ अतः कुर्भवति । इकारश्चोपधायाः । अनिष्टं रपतीति रिपुः शत्रुः ॥

अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुक्धुक्दीर्घ-हकाराश्च ॥ २८ ॥

अर्ज षर्ज अर्जने । दृशिर् प्रेक्षणे । कमु कान्तौ । अम रोगे गत्यादौ वा । पसि नाशने ॥ बाधृ लोडने ॥ एभ्यः षड्भ्यो धातुभ्यः कुप्रत्ययः । एतेषां यथाक्रममृजि पशि तुक् धुक् दीर्घा हकार इत्येते आगमा आदेशाश्च भवन्ति ॥ अर्जयति गुणान् ऋजुः प्रगुणः ॥ सर्वमविशेषेण पश्यतीति पशुर्गवि मृगादिषु देवे च । अतो महादेवः समासे पशुपतिः । अश्वपत्यादित्वादण् पाशुपतः । पशु श्वादौ निपातः । पशु इत्यर्थमव्ययमिति धरणिः ॥ कमिमनीत्यत्रैव कन्तुशब्दो व्युत्पादितः । अतश्चात्र कमेर्ग्रहणं प्रपञ्चार्थमिति लक्ष्यते । कन्तुः कन्दर्पः ॥ अन्धुः कूपः । पुंस्येवान्धुप्रही कूप इत्यमरः । कर्कन्धुर्नष्टकूपः स्यादिति सुभूतिः ॥ पांशुर्धूलिः । पांशुर्ना न द्वयो रज इत्यमरः । पांशुर्धूलिषु सस्यार्थचिरसञ्चितगोमये । शान्त० १२, । इति तालव्यान्ते विश्वप्रकाशः । दन्त्यान्तोऽपि । तालव्याश्चपि दन्त्याश्च संबसूकरपांसव इति शकारभेदः । २५, कणिकाभिरपां सुखरा वृन्दावनमारुता ववुरपांसुखराः । वृ० २८ । इति वृन्दावनयमकम् ॥ बाहुः स्त्रीपुंसयोर्भुज इत्यमरः । अकारान्तोऽपि वाहशब्दो भुजवाचकः । तथा च वाहोऽश्वभुजयोः पुमानिति दामोदरः । टावन्तोऽप्ययम् । वाहुर्वाहा भुजा भुजः । सुवाहा इति वासवदत्तायां सुबन्धुश्लेषः । शोभनाश्वाः पक्षे शोभनभुजाः ॥

प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ॥ २८ ॥

प्रथ प्रख्याने । म्रद मर्दने । भ्रस्ज पाके ॥ एभ्यः कुर्भवति । एषाञ्च संप्रसारणं भ्रस्जेः सलोपश्च ॥ पृथुरादिराजो विस्तीर्णश्च । स्त्रियां पृथ्वी ॥ म्रदितुं शक्यते मृदु कोमलम् । स्त्रियां मृद्वी ॥ न्यङ्क्वादित्वात्कुत्वे भृज्जति तपसा भृगुर्मुनिभेदः प्रपातश्च । भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि । गान्त० ६, । इति विश्वः । भृगोरपत्यं भार्गवः । बहुवचने तु अत्रिभृगुवत्सकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च । पा० २, ४, ६५ । इति तद्धितलुपे भृगवः ॥

लघिवंह्योर्नलोपश्च ॥ ३० ॥

लघि गतौ । बहि महि वृद्धौ ॥ आभ्यां कुः स्यादनयोर्नलोपश्च । लङ्घितुं शक्यत इति लघुः स्वल्पः । स्त्रियां वोतो गुणवचनादिति पा० ४,१,४४, । ङीष् । लघ्वी । लघुः । पृथ्वादित्वाल्लघिमा ॥ बालमूललघ्वगुलीनां वा लो रत्वमापद्यते । पा० ८, २, १८, २, । इति रेफादेशः । रघुर्नृपभेदः ॥ बहुः प्रचुरसंख्ययोः । बहूनर्थान् लातीति बहुलम् ॥

ऊर्णोतेर्नुलोपश्च ॥ ३१ ॥

ऊर्णुञ् आच्छादने ॥ अस्मात्कुप्रत्ययो भवति नुलोपश्च । ऊरुर्जङ्घा । ऊरूत्तरपदादौपम्ये । पा० ४, १, ६९ । ऊङ् । करभोरूः । नागनासोरूः ॥

महति ह्रस्वश्च ॥ ३२ ॥

ऊर्णुञ् धातोरेव महति वाच्ये कुप्रत्ययो ह्रस्वो धातोर्नु-

लोपश्च । उरु महत् । पृथ्वादित्वादिमनिच् । प्रियस्थिरेत्यादिना वरादेशः । वरिमा । वरिष्ठः । वरीयान् । दधत्युरोराजद्वयमुर्वशी तलं भुवो गतेव स्वयमुर्वशीतलम् । वभौ मुखेनाप्रतिमेन काचन श्रियाधिका यां प्रति मेनका च न । ६- ८६, । इति माघे पादान्तयमकम् ॥

**श्लिषेः कश्च ॥ ३३ ॥**

श्लिष आलिङ्गने ॥ अस्मात्कुप्रत्ययः कश्चान्तादेशः । श्लिक्कुः परवशो ज्योतिषश्च ॥

**आङ्परयोः खनिशृभ्यां डिच्च ॥ ३४ ॥**

खनु अवदारणे । शृ हिंसायाम् ॥ आभ्यां यथाक्रममाङ्परयोरुपपदयोः कुः स्यात् स च डिद्भवति । डित्त्वाट्टिलोपः । आखनतीत्याखुःमूषकः स्याद्वराहश्च ॥ परं शृणातीति परशुः कुठारोऽस्त्रभेदश्च । पृषोदरादित्वादलोपः । पर्शुः परशुना सह । शब्दभेद ३८ । इति विश्वः ॥

**हरिमितयोर्द्रुवः ॥ ३५ ॥**

द्रु गतौ ॥ अस्माद्धरिमितयोरुपपदयोः कुः स्यात् स च डित् । हरिद्रुर्दारुहरिद्रा ॥ मितद्रुः ॥

**शते च ॥ ३६ ॥**

शतशब्द उपपदे द्रुवः कुप्रत्ययो भवति स च डित् । शतधा द्रवतीति शतद्रुर्गङ्गा नदीभेदश्च ॥ बाहुलकात्केवलादपि कुप्रत्ययः । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः । शाखावचनो

ऽपि द्रुशब्दः। तद्योगात् द्युद्रुभ्यां मः। पा० ५,२,१०८,। द्रुमः॥

खरुशङ्कुपीयुनीलङ्गुलिगु॥ ३७॥

खरु इत्येवमादयः शब्दाः कुप्रत्ययान्ता निपात्यन्ते। खनेः कु रश्चान्तादेशः। खरुः कामः। खरुर्दन्ते हरे दर्पे हये श्वेते तु वाच्यवत्। रान्त० ७७,। इति विश्वः॥ शके-र्नुम्। शकि चाशे शङ्कायाञ्च। अतः कुः स्यात्। शङ्कुर्ना कीलशल्ययोः। शङ्कुः कीले गरे शस्त्रे संख्यापादपभेदयोः। यादोभेदे च पापे च स्थाणावपि च दृश्यते। विश्वप्र० कान्ते ४२,। शकिग्रहणं पृभिदिव्यधीत्यादिनोक्तेः वैचित्र्यार्थम्। शङ्कुपूर्वाल्लातेरातोऽनुपसर्गे कः। पा० ३,२,३,। इति के शङ्कुला कर्तरीति तत्पुरुषे तुल्यार्थेत्यत्र वृत्तिः॥ पा पाने॥ कुर्युगागम ईत्वं चान्तादेशः। पीयुर्वायसकालयोः॥ लगि गतौ॥ अस्मान्निपूर्वात्कुर्नेर्दीर्घश्च। नीलङ्गुः कृमिजातौ स्यात् भ्रमरालीप्रसूनयोः। गान्ते ५०,। इति विश्वः। के चिद्वातूपसर्गयोर्दीर्घमाहुः। नीलाङ्गुः॥ लगे सङ्गे। सर्वत्र लगतीत्यत्रार्थे कुप्रत्यये धातोरत इत्वञ्च। लिगु चित्ते नपुंसकमिति वररुचिः॥ खजि गतिवैकल्ये। बाहु-लकादतोऽपि कुः। खञ्जयोः पगौ नुगागमश्च। पङ्गुर्गति-हीनः॥ तथा हन्तेरत इत्वञ्च गुगागमश्च धातोः। हन्ति स्वगन्धेनान्यगन्धानिति हिङ्गुर्वणिग्द्रव्यम्॥

मृगय्वादयश्च॥ ३८॥

मृगयुप्रभृतयः कुप्रत्ययान्ता निपात्यन्ते । मृग देव मित्र कुमार अध्वर इत्येतेषूपपदेषु या प्रापणे इत्यस्माद्धातोः कुः स्यात् । मृगं यातीति मृगयुर्व्याधः ॥ देवयुर्धार्मिकः ॥ मित्रयुर्लोकयात्राभिज्ञः । तस्यापत्यमित्यत्रार्थे शुभ्रादित्वात् ढकि केकयमित्रयुप्रलयानां यादेरियादेशापवादो दाण्डिनायनेत्यादिना युशब्दलोपः । मैत्रेयो रक्षितः ॥ कुमारयू राजपुत्रः ॥ अध्वरस्याकारलोपश्च । अध्वर्युर्याजकः । अध्वर्युक्रतुरित्यादौ रक्षितेनाध्वरमिच्छतीति क्यचि कव्यध्वरेत्यन्तलोपे क्याच्छन्दसीत्युप्रत्यये छान्दसा अपि क्वचिद्भाषायां प्रयुज्यन्त एवेत्यत्रार्थे ज्ञापकमुक्तम् । एवं चात्रत्यः पाठः प्रपञ्चार्थः ॥ कुह विस्मापने । बाहुलकात्ततोऽपि कुः । कुहुः कुह्वमावास्याचन्द्रः ॥ पडि गतौ । धातोर्वृद्धिश्च । पाण्डुः । यदपत्यानि पाण्डवाः ॥ पील प्रतिष्टम्भे । पीलुर्मतङ्गजः । पीलु गंजे द्रुमे काण्डे परमाणुप्रसूनयोः । लान्ते २२ । इति विश्वः । समासे महापीलुपतिः ॥ मञ्जिः सौत्रो धातुः । मञ्जु शोभनम् ॥ कडि मदे । कण्डुः । मृगस्य कण्डुरिति समासे पृषोदरादित्वान्नलोपे मृकण्डुः । अपत्ये शुभ्रादित्वात् ढक् । मृकण्ड इति केचित्तत्र पठन्ति । ढे लोपोऽकद्र्वाः । पा० ६,४,१४७, । इत्युलोपः । मार्कण्डेयो मृकण्डज इत्यागमः । एवं निघण्टु पलाण्डु कर्करेटु करेटु पेरु डमरु प्रभृतयोऽप्यत्रैव द्रष्टव्या आकृतिगणत्वात् ॥

मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥३८॥

मदि स्तुत्यादौ । वाश्ट शब्दे । मथे विलोडने । चते याचने । चक इति सौत्रो धातुः । अकि लक्षणे ॥ एभ्य उरच् स्यात् । मन्दुरा वाजिशाला ॥ वाशुरा रात्रिः ॥ मथुरा नगरी ॥ चतुरो दक्षः ॥ चक्रुरो रथः ॥ अङ्कुरो वीजोत्पादः । खर्जूरादित्वादूरप्रत्ययोऽपि । अङ्कूरोऽप्यङ्कुरो मत इति वर्णविवेकः । अङ्कूरोऽङ्कुर एव च शब्दभेदे ६, । इति विश्वप्रकाशः ॥

व्यथेः संप्रसारणं किच्च ॥ ४० ॥

व्यथ भयचलनयोः ॥ अस्मादुरच् किद्भवति सम्प्रसारणं च धातोः । विथुरश्चौररक्षसोः ॥

मकुरदर्दुरौ ॥ ४१ ॥

एतौ निपात्येते ॥ मकि मण्डने । अस्मादुरच् नलोपश्च धातोः । मकुरो दर्पणो मतः । बाहुलकादकारस्योकारे कृते मकुरो मुकुरोऽपि च । शब्द० २९, । इति विश्वः । रामो हेममकुरङ्गत इति मतिनिर्णयः । उकारसहितो मकारो मुकुर इत्यपिभवतीति केचित्, प्रमाणं चिन्त्यम् ॥ दॄ विदारणे । उरच् । धातोर्द्विवचनमभ्यासस्य रुगागमो धातोष्टिलोपश्च निपात्यते । दर्दुरो मेघमण्डूकवाद्यभेदेषु कीर्त्तित इति चन्द्रः । दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः । दर्दुरा चण्डिकायान्तु ग्रामजाले च दर्दुरम् । रान्ते ४८, । इति विश्वः ॥

मद्गुरादयश्च ॥ ४२ ॥

मद्गुरप्रभृतयः शब्दा उरजन्ता निपात्यन्ते॥ मदी हर्षे। धातोर्गुगागमश्च। मद्गुरो मत्स्यभेदः स्यात्॥ कर्ब वर्णे। उगागमश्च। कर्बुरः श्वेतरक्षसोः॥ बन्ध बन्धने। बन्धुरः। खर्जूरादित्वादूरप्रत्ययोऽपि। बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिष्विति रन्तिदेवकोशः। चिनोतेः कुक् च। चिकुरश्चलकेशयोरित्यमरः॥ कुक आदाने। धातोर्वा कुगागमश्च। कुकुरः कुक्कुरो मत इति हट्टचन्द्रः॥ अत सातत्यगमने। धातोरादौ दीर्घः। आतुरोऽक्षमः। घृतमुत्तमं विधिविपक्कमाहितं प्रपिबन्निदं जयति कुष्ठमातुर इति वैद्यम्॥ वा गतिगन्धनयोः। गुगागमश्च धातोः। वागुरा मृगबन्धिनी॥ शक्लृ शक्तौ। वकि कौटिल्ये॥ आभ्यां प्रत्ययरेफस्य लत्वं वङ्केर्नलोपश्च। शकुलवकुलौ स्यातां मत्स्यवृक्षविशेषयोः॥

असेरुरन्॥ ४३॥

असु क्षेपणे॥ अस्मादुरन्प्रत्ययः। अस्यतीत्यसुरो दैत्यः। स्वार्थे प्रज्ञादित्वादण्। आसुरः स एव॥

मसेश्च॥ ४४॥

मसी परिमाणे॥ अस्मादुरन्। मसुरो व्रीहिभेदे स्यात्। तथा च। मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति। मसूरमसुरौ च द्वावेतावपि त्रयोर्मतौ॥ रान्ते २२०,। इति विश्वप्रकाशः। स्त्रियां टाप्। मसुरा पण्यस्त्री। पञ्चमे पादे मसेरूरन्नित्यूरन्प्रत्यये मसूरशब्दोऽप्यस्मिन्नेवार्थे। तथा च मसूरो मसुरो मत इति द्विरूपकोषः॥

श्वावशेराप्तौ ॥ ४५ ॥

श्व इति कृताकारलोप आशुशब्दः। तस्मिन्नुपपद आप्तौ गम्यमानायामशू व्याप्ताविल्यस्माद्धातोरुरन् स्यात्। श्वशुरो दम्पत्योः पिता। श्वशब्दोऽत्राशुशब्दाभिधायी। आशु व्याप्तव्यः श्वशुर इति धातुपारायणम्। तस्यापत्यं राजश्वशुराद्यत्। पा० ४, १, १३७,। श्वशुर्यः श्यालः। श्वशुरो नाम कश्चित्। तस्यापत्यम्। सम्बन्धिशब्दानां तत्सदृशात्प्रतिषेध इति यति निषिद्धेऽत इञि। पा० ४, १, ९५। श्वाशुरिः। स्वागतादेराकृतिगणत्वादैज्निषेधः। स्त्रियां श्वशुरस्य स्त्रीत्वत्वार्थे ऊङ्विधौ श्वशुरस्योकाराकारयोर्लोपश्च। पा° ४, १, ६८, ५ १,। इति वार्त्तिकं श्वश्रूः। पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरश्च तयोः पितेत्यमरः॥

अविमह्योष्टिषच् ॥ ४६ ॥

अव रक्षपालने। मह पूजायाम्॥ आभ्यां टिषच् स्यात्। अवन्ति प्रीणन्ति तं नद्य इत्यत्रार्थेऽविषः समुद्रः॥ महन्त्यनेन देवानिति महिषः पशुविशेषः। लुलापो महिष इत्यमरः। महिषः सरभ उक्तो रक्ताक्षः कासरो लुलापश्च। २, ७३,। इति हलायुधः। टित्त्वात् स्त्रियां ङीप्। अविषी नदी॥ महिषी स्त्रीपशू राजपत्न्यपि॥

अमेर्दीर्घश्च ॥ ४७ ॥

अम गतौ॥ अस्माट्टिषच् धातोर्दीर्घश्च। आमिषं मांसादि। आमिषं भक्ष्यमांसयोरिति द्विरूपकोषः। आमिषे

पृषोदरादित्वादादौ पत्वे ह्रस्वत्वञ्च । भोग्यवस्तुनि त्वामिषमिवामिषमिति वर्णविवेकः ॥

रुहेर्वृद्धिश्च ॥ ४८ ॥

रुह जन्मनि । अस्माट्टिषच् वृद्धिश्च धातोः । रौहिषो मृगभेदः स्याद्रौहिषं च तृणं मतमिति संसारावर्त्तः । स्त्रियां रौहिषी मृगी लता च । अव्युत्पन्नोऽवृद्धो रोहिच्छब्दोऽप्यस्ति । रोहिद्भूतां रिरमयिषमृष्यस्य वपुषेति महिम्नः स्तवः । २२, । क्रमेण सुप्तरोहिषीत्यभिनन्दः ॥

तवेर्णिद्वा ॥ ४९ ॥

तवेति सौत्रो धातुः ॥ अस्माट्टिषच् स च पक्षे णिद्भवति । णित्त्वात्पक्षे वृद्धिः । तविषताविषावब्धौ त्रिदिवं वाहतुः क्वचित् । स्त्रियां ताविषी तविषी नदी देवकन्या भूमिश्च ॥

नञि व्यथेः ॥ ५० ॥

व्यथ भयचलनयोः ॥ अस्मान्नञ्युपपदे टिषच् । अव्यथिषोऽब्धिसूर्य्ययोः । अव्यथिषी धरारात्रोः ॥

किलेर्वुक्च ॥ ५१ ॥

किल शैत्यक्रीडनयोः ॥ अस्माट्टिषच् धातोर्वुगागमश्च । किल्बिषं पापमनि स्मृतम् ॥

इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् ॥ ५२ ॥

इषु इच्छायाम् । मदी हर्षे । मुद हर्षे । खिद दैन्ये । छिदिर्

द्विधाकरणे । भिदिर् विदारणे । मदि स्तुत्यादौ । चदि आह्लादने । तिम आर्द्रीभावे । मिह सेचने । मुह वैचित्ये । मुच्लृ मोचणे । रुच दीप्तौ । रुधिर् आवरणे । बन्ध बन्धने । शुष शोषणे ॥ एभ्यः षोडशधातुभ्यः किरच् स्यात् । इषिरो-ऽग्निः ॥ मदिरा सुरा ॥ मुदिरो मेघः । मुदिरः कामुके अभ्रे । रान्ते १२७, । इति विश्वप्रकाशः ॥ खिदिरश्चन्द्रः ॥ छिदिरोऽसिकुठारयोः ॥ भिदिरं वज्रम् । भिदुरं पविरित्य-मरः । घुरच्कुरचौ कर्मकर्त्तरीति जयादित्यवचनाद्वामनमते साधुः ॥ मन्दिरम् गृहम् । मन्दिरं मन्दिरापि स्यात् । श-ब्दभेदे १९, । इति विश्वः ॥ चन्दिरौ चन्द्रहस्तिनौ ॥ तिमिरं तमोऽक्षिरोगश्च ॥ मिहिरः सूर्यः ॥ मुहिरः काम्यासभ्ययोः ॥ मुचिरो दाता ॥ रुचिरं शोभनम् ॥ रुधिरं शोणितम् । अनि-दितां हल उपधायाः क्ङिति । पा० ६, ४, २४, । इति नलोपः ॥ बधिरो गतश्रोत्रेन्द्रियः ॥ शुषिरं छिद्रमाकाशश्च ॥

अशेर्नित् ॥ ५३ ॥

अश भोजने ॥ अतः किरच् स च निद्भवति । अशिरो वह्निरक्षसोः ॥

अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥५४॥

अजिरादयः सप्त किरजन्ता निपात्यन्ते ॥ अजेर्वीभावा-भावः । अजिरमङ्गणम् ॥ शश प्लुतगतौ । उपधाया इत्वम् । शिशिरमृतुभेदः । शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्य-वत् । रान्ते १३३, । इति विश्वः ॥ श्रथ मोचने । उप-

धाया इत्त्वम् । रेफस्य लोपः । प्रत्ययरेफस्य लत्वम् । शिथिलमकठिनश्लथयोः ॥ तिष्ठतेराल्लोपः स्थिरं निश्चलम् । गवियुधिभ्यां स्थिरः । पा० ८,३,९५ । इति षत्वम् । गविष्ठिरः । युधिष्ठिरः ॥ स्फायी वृद्धौ । आल्लोपः । स्फिरं प्रभूतम् ॥ तिष्ठतेर्वुक् ह्रस्वत्वञ्च । स्थविरो भिक्षुवृद्धयोः । प्रज्ञादित्वादणि स्थाविरं वृद्धत्वमित्यमरः ॥ खद हिंसायाम् । खदिरो वृक्षभेदः ॥ बहुलवचनात् शीङो वुक् ह्रस्वत्वञ्च । शिविरं नृपस्य मूलस्थानम् । निवेशः शिविरं षण्ढ इत्यमरः ॥

सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ॥ ५५ ॥

सल गतौ । कल संख्याने । अन च । धातुपाठे, २४, ६२. । मह पूजायां । भड इति सौत्रो धातुः । भडि परिहासे । शडि रुजायाम् । पिडि सङ्घाते । तुडि तोडने । कुक आदाने । भू सत्तायाम् ॥ एभ्य एकादशभ्य इलच् स्यात् ॥ सलति निम्नमिति सलिलम् जलम् ॥ कलिलं मिश्रं गहनञ्च ॥ अनिलो वातः ॥ महिला स्त्री । पृषोदरादित्वात् महिलाशब्दस्यार्थे महेलाशब्दोऽपि साधुः । तथा च दमयन्तीकाव्ये । परमहेलारतोऽप्यपारदारिकः । परस्य महेला स्त्री । अथ च परमहेला परमक्रीड़ा ॥ भडिलो शूरसेवकौ ॥ भण्डिलो दूतः कल्याणञ्च । शण्डिलो मुनिः ॥ यस्यापत्यं शाण्डिल्यः ॥ पिण्डिलो गणकः । तुण्डिलो मुखरः । कोकिलः पिकः । स्त्रियां टाप् । कोकिला । अवकुष्टकोकिलयेति वृत्तिः ।

भविलो भव्यः ॥ कुट कौटिल्ये । बाहुलकादतोऽपि भवति । कुटिलः क्रूरकर्मा ॥

**कमेः पश्च ॥ ५६ ॥**

कमु कान्तौ ॥ अत इलच् पश्चान्तादेशः । कपिलो वर्णभेदः । मुनिः ॥

**गुपादिभ्यः कित् ॥ ५७ ॥**

गुपू रक्षणे । तिज निशाने । पूज पूजायाम् । शुष शोषणे । दिव देवने । गुह सम्वरणे ॥ एभ्य इलच् किद्वति । गुपिलो राजा ॥ तिजिलो निशाकरः ॥ पूजिलो देवः ॥ शुषिलः पवनः ॥ देविलो धार्मिकः ॥ गुहिलं वनम् ॥

**मिथिलादयश्च ॥ ५८ ॥**

मिथिलादय इलजन्ता निपात्यन्ते ॥ मथे विलोडने । अकारस्येत्वम् । मथ्यन्ते रिपवोऽत्रेति मिथिला विदेहनगरी । तस्यापत्यमिति मैथिली जानकी प्रोक्ता ॥ गमेस्तकारान्तादेशः । गतिला वेत्रलता ॥ तकि कृच्छ्रजीवने । नलोपश्च । तकिलौषधिः ॥ चमु अदने । अस्मात् डुगागमः । चण्डिला नदी ॥ पथे गतौ । पथिलः पथिकः ॥

**पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ॥ ५९ ॥**

पत्लृ गतौ । कठ कृच्छ्रजीवने । कुठि च । गड सेचने । गुड रक्षायाम् । दन्श दशने ॥ एभ्य एरक् स्यात् । पतेरः पक्षी गन्ता च ॥ कठेरः कृच्छ्रजीवी ॥ बाहुलकानु-

मोऽभावः । कुठेरः पर्णासः ॥ गडेरो मेघः ॥ गुडेरो गुडकः ॥ अनुनासिकलोपे दशेरो हिंस्रः ॥

कुन्वेर्नलोपश्च ॥ ६० ॥

कुवि आच्छादने ॥ अत एरक् नलोपश्च । अन्यैश्वर्यं कुम्बतीति कुवेरस्त्र्यंबकसखः । वेरं शरीरमित्यागमः । कुत्सितं वेरमस्यास्ति कुवेर इत्यपि व्युत्पत्त्यन्तरम् ॥

शदेस्त च ॥ ६१ ॥

शद्लृ शातने ॥ अत एरक् । तकारान्तादेशः शतेरः शत्रुः ॥

मूलेरादयः ॥ ६२ ॥

मूलेरादय एरगन्ता निपात्यन्ते ॥ मूल प्रतिष्ठायाम् । गुध परिवेष्टने । गुह्ङ संवरणे । मुह वैचित्त्ये ॥ एभ्य एरक् । मूलेरो राजा ॥ गुधेरो गोप्ता ॥ गुहेरो लोहघातकः ॥ मुहेरो मूर्खः ॥

कबेरोतच् पश्च ॥ ६३ ॥

कबृ वर्णे ॥ अत ओतच् पश्चान्तादेशः । कपोतः पक्षी ॥ गुपादिसूत्रादारभ्यैतत्सूत्रं यावत्सप्तसूत्राणि केषाञ्चिदसम्मतानि ॥

भातेर्डवतुप् ॥ ६४ ॥

भा दीप्तौ ॥ अतो डवतुप् । भवान् सर्वनाम । भवतष्ठक्छसौ । पा० ४, २, ११५, । भावत्को भवदीयः । अव्यु-

त्यन्नं वा प्रातिपदिकं भवदित्युकारान्तवदिति मतुप्सूत्रे न्यासः ॥

कठिचकिभ्यामीरन् ॥ ६५ ॥

कठ कृच्छ्रजीवने। चक तृप्तौ॥ आभ्यामीरन्। कठोरः कठिनः पूर्णश्च। कठोरतारापतिलाञ्छनच्छविः। १, २०। इति माघः॥ चकोरः पक्षिविशेषः॥

किशोरादयश्च ॥ ६६ ॥

किशोरादय ओरनन्ता निपात्यन्ते॥ शॄ हिंसायाम्। षह मर्षणे। गै शब्दे॥ किंपूर्वस्य शृणातेष्टिलोपः। किमोऽन्त्यस्य लोपः। किशोरोऽश्वशावकः॥ सहोरः साधुः॥ गौरोऽरुणे सितेऽपिच। गौरोऽरुणे सिते पीते विशुद्धे चाभिधेयवत्। गौरस्तु विशदे पद्मे केसरे सितसर्षपे॥ गौरः शशिनि गौरी तु नग्नकन्योमयोर्मता। रोचनीरजनीपिङ्गाप्रियङ्गु-वसुधासु च। नदीभेदे च गौरी स्याद्वरुणस्य च योषिति। विश्वं रान्तं २९॥

कपिगडिगण्डिकटिपटिभ्य ओलच् ॥ ६७ ॥

कपि चलने। निर्देशान्नलोपः। गड सेचने। गडि वद-नैकदेशे। कटे वर्षावरणयोः। पट गतौ॥ एभ्य ओलच्। कपोलो वदनैकदेशः॥ गडोलगण्डोलौ गुडकपर्यायौ॥ क-टोलः कटुः कटोलश्चाण्डालः। कटोलवीणा चाण्डालव-ल्लकी। चाण्डालिका तु कण्डोलवीणा चाण्डालवल्लकीत्य-मरः॥ पटोलस्तु समाख्यातः फलवस्त्रविशेषयोः ॥ कडि

मदे । कण्डोलः पिटक इति का चिदुणादिवृत्तिः ॥ कल्ल शब्दे । बाहुलकादतोऽपि भवति । कल्लोल इति धातुप्रदीपः ॥

मीनातेरूरन् ॥ ६८ ॥

मीञ् हिंसायाम् ॥ अत ऊरन् । मयूरः पक्षिविशेषः मह्यां रौतीति पृषोदरादित्वादपि मयूरः । कलिङ्गस्तु मयुं शब्दं करोतीत्यातोऽनुपसर्गात्क इति कप्रत्यये दीर्घत्वे वा मयूर इत्याह । एवञ्च प्रपञ्चार्थमिदम् ॥

स्यन्देः सम्प्रसारणञ्च ॥ ६९ ॥

स्यन्दू स्रवणे ॥ अत ऊरन् सम्प्रसारणञ्च । सिन्दूरं रक्तचूर्णे स्याद्राजलेखे तदन्तिके । सिन्दूरी वृक्षभेदेऽपि सिन्दूरी रक्तचेलिका ॥ सिन्दूरो रक्तचूर्णे स्यात्सिन्दूरस्तरुभिद्यपि । सिन्दूरी रोचनीरक्तचेलिकाधातकीषु च । रान्तं २०७, । इति विश्वप्रकाशः ॥

सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥ ७० ॥

षिञ् बन्धने । तनु विस्तारे । गम्लृ गतौ । मसी परिमाणे । षच सेचने । अव रक्ष पालने । डुधाञ् धारणपोषणयोः । क्रुश आह्वाने ॥ एभ्योधातुभ्यस्तुन् स्यात् । सिनोति जलमिति सेतुर्जलबन्धः । सेतुरालौ स्त्रियां पुमान् । अम० २,१,१४, ॥ तितुत्रतथसिसुसरकसेषु । पा० ७,२,९, । इत्यादिनेट्प्रतिषेधः । तन्तुः सूत्रम् । सूत्राणि नरि तन्तव इत्यमरः । वरतन्तुर्मुनिः । तित्तिरिवरतन्तु । पा० ४, ३,

१०२। इत्यादिना प्रोक्तार्थे छण्। वारतन्तवीयः॥ गन्तुः पथिकः। आङ्पूर्वादागन्तुरभ्यागतः॥ मस्तु दधिभवं मण्डम्। क्लीवलिङ्गमेतत्॥ सच्यते स्नेहेन सिच्यत इति सक्तुर्यवविकारः। अर्द्धर्चादिरयम्। सिध्मादित्वान्मत्वर्थे लच्। सक्तुलः॥ ज्वरत्वरेत्यूठ्। पा० ६, ४, २०। बाहुलकादकित्वादप्राप्तेरोतुर्विडालः॥ धातुर्गैरिकमस्त्रियाम्। धातुः स्यादश्मविकृतौ विषयेष्विन्द्रियेऽपि च। भूतादिरसरक्तादिश्लेष्मादिवसुधादिषु। तान्ते १९। इति विश्वः॥ तृज्वत्क्रोष्टुः। पा० ७, १, ९५। इति विश्वः॥ तृज्वद्भावादिकम्। क्रोष्टा शृगालः। स्त्रियाश्चेभ्यो ङीप्। पा० ४, १, ५। क्रोष्ट्री॥

पः किच्च ॥७१॥

पा पाने॥ अस्मात्तुन् स च किद्भवति। कित्त्वादीत्वम्। पीतुर्वह्नौ दिवाकरे॥

अर्तेश्च तुः॥ ७२॥

ऋ गतौ॥ अतस्तुः स च किद्भवति। ऋतुः स्त्रीपुष्पकालयोः। ऋतोरण्। ऋतौ भवमार्तवं। ऋतुरेवार्तवः। प्रज्ञादित्वादण्॥

कमिमनिजनिगाभायाहिभ्यश्च॥ ७३॥

कमु कान्तौ। मन ज्ञाने। जनी प्रादुर्भावे। गै शब्दे। भा दीप्तौ। या प्रापणे हि गतौ॥ एभ्यस्तुः स्यात्। कन्तुः कन्दर्पचित्तयोः। कमिग्रहणं प्रपञ्चार्थम्। अर्जिदृशीत्यादिना कुप्रत्यये तुकि सिद्धत्वात्॥ मन्तुरपराधः। कण्डा-

दित्वाद्यकि मन्तूयति शब्दः ॥ जन्तुः प्राणी ॥ गातुः पथिक-गन्धर्वौ । गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च । विश्व० तान्ते २१ । भातुरादित्यः ॥ यातुरध्वगकालयोः । रक्षसि वर्तमानो यातुशब्दः क्लीबे ॥ हेतुः कारणम् ॥

चायः किः ॥ ७४ ॥

चायृ पूजानिशामनयोः ॥ अतस्तुर्धातोः किरादेशश्च । केतुर्ग्रहपताकयोः । धूमकेतुरुत्पातः ॥

आप्नोतेर्ह्रस्वश्च ॥ ७५ ॥

आप्लृ व्याप्तौ ॥ अतस्तुर्ह्रस्वश्च धातोः । अप्तुः शरीरम् ॥

वसेस्तुन् ॥ ७६ ॥

वस निवासे ॥ अतस्तुन् स्यात् । वस्तु द्रव्यम् ॥

अगारे णिच्च ॥ ७७ ॥

वसतेरागारे वाच्ये तुन् णिद्भवति । वेश्मभूर्वास्तुर-स्त्रियाम् । अम० २, २, ११ ।

कृञः क्तुः ॥ ७८ ॥

करोतेः क्तुः स्यात् । गुणाभावार्थः कः । क्रतुर्यज्ञः । पूतक्रतुरिन्द्रः । तस्य स्त्रीत्वर्थे पूतक्रतोरै च । पा० ४, १, ३६ । इति ङीबैकारौ । पूतक्रतायीन्द्रभार्या ॥ बाहुल-कात् ला आदाने । अतोऽपि भवति । लतुः ॥ गर्गादित्वा-ज्ज्ञातव्य इत्युपाध्यायसर्वस्वम् ॥

एधिवह्योश्चतुः ॥ ७९ ॥

एध वृद्धौ । वह प्रापणे ॥ आभ्यां चतुः । चकारः

स्वरार्थः । चितोऽन्त उदात्तः । एधतुः पुरुषो मतः ॥ वहतुरनड्वान् ॥

जीवेरातुः ॥ ८० ॥

जीवतेरातुः स्यात् ॥ जीवातुर्जीवने भक्ते जीवातुर्जीवनौषधे । विश्व० तान्ते १२५, ॥

आटकन्वृद्धिश्च ॥ ८१ ॥

जीवेराटकन्वृद्धिश्च धातोः । जैवाटकः शशाङ्कः स्यादायुष्मानपि कीर्त्तित इत्यमरः ॥

कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ॥ ८२ ॥

कृष विलेखने । चमु अदने । तनु विस्तारे । धन धान्ये । सर्ज अर्जने । खर्ज व्यथने ॥ एभ्यः षड्भ्य ऊः स्यात् । कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मतेति रभसकोशः ॥ चमति परराष्ट्रमिति चमूः सेना । ङ्यापोः संज्ञाछन्दसोर्बहुलम् । पा० ६, ३, ६३ । इति पक्षे ह्रस्वत्वम् । चमुपतिः । चमूपतिः ॥ तनूः शरीरम् । स्त्रियां मूर्त्तिस्तनुस्तनूरित्यमरः । ननु सुतनूमनुपालयानुयाताम् । ७, १२, । इति माघः । सम्बुद्धिह्रस्वत्वे वरतनु सम्प्रवदन्ति कुक्कुटा इति वृत्तिः । ह्रस्वान्ततनुशब्दे गुणः स्यात् । ऊङि वा ह्रस्वः । वरतनुरमुनोपहूय । माघ० ७, ५८, । इति माघे ह्रस्वान्तस्य प्रयोगः ॥ धनूः शस्त्रम् ॥ सर्जूर्वणिक् ॥ खर्जूः कण्डूया ॥ बहुलवचनात्कुह विस्मापने । अतोऽपि चोरादिकादूः । कुहूरिति धातुप्रदीपटीका ॥

मृजेर्गुणश्च ॥ ८३ ॥

मृजू शुद्धौ ॥ अत ऊः स्यात् । वृद्ध्यपवादो गुणश्च । मर्जूः शुद्धिर्मार्जकश्च ॥

खडेर्डुवा ॥ ८४ ॥

खड खडि भेदे ॥ अत ऊः । डुडागमश्च प्रत्ययस्य वा भवति । खड्डूर्बाहुजङ्घाभरणम् । खडूर्मृतशय्येति ग्रथान्ते क्रमः ॥ इदं सूत्रं न सम्मतं सर्वत्र ॥

वहेर्धश्च ॥ ८५ ॥

वहतेरूप्रत्ययो धकारश्चान्तादेशः । वधूर्जायास्नुषास्त्रीष्विति धान्तेऽमरः । वधूः स्नुषानवोढास्त्रीभार्य्यास्पृक्काङ्गनासु च । धान्ते २२, । इति विश्वप्रकाशः ॥

कषेश्छश्च ॥ ८६ ॥

कष हिंसेति दण्डकः ॥ अत ऊश्छश्चान्तादेशः । कच्छूः पामा । मत्वर्थे कच्छ्वा ह्रस्वश्च पा० ५, २, १०७, ३, । इति रप्रत्ययः । कच्छुरः ॥

णित्कशिपद्यर्तेः ॥ ८७ ॥

कश गतौ । पद गतौ । ऋ गतौ ॥ एभ्य ऊप्रत्ययो णिद्भवति । काशूर्विक्लवधातुः स्याच्छक्तावपि च दृश्यते ॥ पादूश्चरणधारणी ॥ आरूः पिङ्गलः ॥

अणो डश्च ॥ ८८ ॥

अण दण्डकः ॥ अत ऊः । स च णिद्भवति डश्चान्तादेशः । आडूर्जलप्लवद्रव्यम् ॥

नञि लम्बेर्नलोपश्च ॥ ८९ ॥

लम्बतेर्नञ्युपपदे ऊः स्यात्स च णिद्भवति नलोपश्च। न लम्बते जलेऽसावित्यलाबूः। तुम्ब्यलाबूरुभे समे इत्यमरः॥

केऽण एरङ् चास्य ॥ ९० ॥

शॄ हिंसायाम्॥ अतः कशब्द उपपदे ऊप्रत्ययः स्यादेरङ् चान्तादेशः। कशेरूस्तृणकन्दे स्त्री। बहुलवचनादुप्रत्ययोऽपि भवतीति केचित्। कशेरु क्लीबलिङ्गम्। कशेरूणि। कशेरुजतुवस्तूनि हित्वा तुरुविरामका इत्यमरः। पुंलिङ्गेऽपि दृश्यते। किङ्कर्वता वराहेण खाद्यन्ते हि कशेरव इति चन्द्रः पृष्ठास्थ्नि तु कशेरुका। अम० २, ६, २, २०,।

त्रो दुक् च ॥ ९१ ॥

तरतेरूः स्यात् दुगागमश्च धातोः। तर्दूः स्यात् दारुहस्तकः॥

दरिद्रातेर्यालोपश्च ॥ ९२ ॥

इश्च आ च या। दरिद्रातेरूः स्यादिकाराकारयोर्लोपश्च। दर्द्रूः कुष्ठप्रभेदः स्यात्। मृगय्वादित्वात् दद्रुः। ह्रस्वान्तस्यायम् प्रयोगः। दद्रुणो दद्रुरोगी स्यादित्यमरः। इको ह्रस्वोऽङ्यो गालवस्येति ह्रस्वत्वेऽपि सिध्यति। भोजदेवशब्दानुशासने तु दरिद्राते र्यालोपश्चेति तिपा निर्देशात् रिश्च आ चेति संहितापाठे र्याशब्दलोपे दद्रूरित्यपि साधितम्। तथा रश्च इश्च आश्चेत्यन्त्यसदेशद्वितीयरेफलोपेन

दर्दूरित्यपि साधितम् । एवञ्च रूपचतुष्टयं वर्णविवेके स्पष्टम् ॥

नृतिशृध्योः कूः ॥ ९३ ॥

नृती गात्रविक्षेपे । शृधु शब्दकुत्सायाम् ॥ आभ्यां कूप्रत्ययः स्यात् ॥ नृतूर्नर्तकः ॥ शृधूरपानम् ॥

ऋतेरम् च ॥ ९४ ॥

ऋत इति सौत्रो धातुः ॥ अतः कूः स्यादमागमश्च धातोः । रन्तूर्देवनदी प्रोक्ता ॥

अन्दूदृन्फूजम्बूकम्बूकफेलूकर्कन्धूदिधिषु ॥ ९५ ॥

अन्दूप्रभृतयः कूप्रत्ययान्ता निपात्यन्ते ॥ अदि बन्धने । अन्दूर्बन्धनविशेषः । संज्ञायां कन् । पा० ५,३,८७, । केऽणः । पा० ७, ४, १३. । इति ह्रस्वः । अन्दुको हस्तिनिगड इत्यमरः । नृतिशृध्योः कूरित्यत्राद्ग्रहणं न कृतं वैचित्र्यार्थम् ॥ दृन्फ उत्क्लेशे । नलोपाभावः । दृन्फूः सर्पजातिः ॥ जमु अदने । बुगागमः जम्बूर्वृक्षभेदः । चान्द्रव्याकरणे जम्बुरिति ह्रस्वान्तो दर्शितः । उदाहृतश्च विक्रमादित्येन । तस्या जम्बोः फलरसो नदीभूय प्रवर्तत इति । ततश्च पृषोदरादित्वात् बाहुलकाद्वा ह्रस्वः । तथा च भारविः । परिणतजम्बुफलोपभोगहृष्टाः । कि० १०, २२, । कमु कान्तौ । बुगागमः । कम्बूः परद्रव्यापहारी । ला दाने कफपूर्वः । कफेलूः श्लेष्मातकतरौ पुंसीति रूपमञ्जरी । एत्वमस्य पूर्वपदस्य निपात्यते । दधातेः कर्कपूर्वस्य कर्कन्धूर्वदरी । धोऽन्त

कर्मणि दिधिपूर्वः षत्वञ्च । दिधि धैर्य्यमिन्द्रियदौर्बल्या-त्स्यति त्यजतीति दिधिषूः पुनर्भूः ॥

मृग्रोरुतिः ॥ ९६ ॥

मृङ् प्राणत्यागे । गॄ निगरणे ॥ आभ्यामुतिप्रत्ययः । इकारस्तकारस्येत्संज्ञापरित्राणार्थः । मरुत्पवनदेवयोः । तसौ मत्वर्थे । पा० १, ४, ९७ । मरुत्वान् । प्रज्ञादित्वा-दणि मारुतः । मरुतशब्दोऽकारान्तोऽप्युत्पन्नोऽस्ति । तथा च विक्रमादित्यकोशः । मरुतः स्पर्शनः प्राणः समीरो मा-रुतो मरुत् । कोषं वाति स दाक्षिणात्यमरुत इति कवि-राजः । पवनोऽन्तेत्यल्पष्टश्वान इति वर्णविवेकः ॥ गरुत्पक्षः । मतुपि यवादित्वाद्वत्वं न भवति । गरुत्मान् ॥

ग्रो मुट् ॥ ९७ ॥

गिरतेरुतिः । तस्य मुडागमश्च । गर्मुत्सुवर्णम् तृणभे-दश्च । गर्मुत्सुवर्णलतयोः । तान्ते १४३, । इति विश्वः ॥

हृषेरुलच् ॥ ९८ ॥

हृष तुष्टौ ॥ अत उलच् । हर्षुलो मृगकामिनोः । बाहुल-काच्चटतेरप्युलच् । चटुलं शोभनम् ॥

हृसृरुहियुषिभ्य इतिः ॥ ९९ ॥

हृञ् हरणे । सृ गतौ । रुह जन्मनि । युष इति सौत्रो धातुः ॥ एभ्य इतिः स्यात् । हरित्ककुभि वर्णे च तृणवा-जिविशेषयोः । हरितेऽपि च दूर्वायां हरिद्वर्णयुतेऽन्यवत् । तान्ते १४२, । इति विश्वः ॥ सरतीति सरित् नदी ॥ रो-

हित् लता । ऋश्यस्य मृगस्य मृगी रोहिदित्युच्यते । तथा च महिम्नः स्तवे । गतं रोहिद्भूतां रिरमयिषुमृश्यस्य वपुषा । २२, । इति ॥ योषित्स्त्री । अजादिपाठात् कृद्धाम्न्त्वात् टापि योषितेति केचित् ॥

तार्डेर्णिलुक्च ॥ १०० ॥

तड आघाते ॥ अस्माण्ण्यन्तादितिर्णेश्च लुक् । लोप हि प्रत्ययलक्षणेन वृद्धिर्न तु लुकि । तडित्विद्युत् ॥

शमेर्ढ ॥ १०१ ॥

शमेर्ढंप्रत्ययः स्यात् । बहुलवचनादित्संज्ञाभाव इडभावो ढकारस्यैयादेशाभावश्च । शण्ढो ना गोपतौ क्लीबे शण्ढ स्यात्तु महल्लकः ॥ वोढा स्याद्गारिके सूते शण्ढः स्यात्पुंसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि । ढान्ते ४, । इति मेदिनीकरः । शण्ढो वर्षवरे क्लीबे गोपतौ चाल्पपूरुषे । ढान्ते ३, । इति विश्वः ॥

कमेरठः ॥ १०२ ॥

कमेरठः स्यात् । कमठः कच्छपः । कमठः कच्छपे भाण्डभेदे च कमठं मतम् । ठान्ते १०, । इति विश्वः ॥ बाहुलकात् जृशमोरप्यठः । जरठशमठौ । जरठः कर्कशे पाण्डौ जरठं कठिनेऽन्यवत् । ठान्ते ११, । इति विश्वः ॥

रमेर्वृद्धिश्च ॥ १०३ ॥

रमतेरठो वृद्धिश्च धातोः । रामठं हिङ्गुनि ख्यातं क्लीबे ॥

शमेः खः ॥ १०४ ॥

शमेः खप्रत्ययः स्यात्। बहुलवचनाद्यथा प्राप्तं न भवति। शङ्खोऽर्धर्चादिः। निधिभेदे च पुंलिङ्गो जलजे तु नपुंसकमिति वृत्तिः। शङ्खोनिध्यन्तरे कम्बुललाटास्थिनखेषु च खान्ते ५। इति विश्वः॥

कणेष्ठः॥ १०५॥

कणतेष्ठप्रत्ययः स्यात्। कण्ठो गले ध्वनावपि। कण्ठो गले सन्निधाने ध्वनौ मदनपादपे॥ ठान्ते ४,॥ इति सः। नीलकण्ठः शितिकण्ठः॥

कलस्तृपश्च॥ १०६॥

तृप प्रीणने अतः कलप्रत्ययः। तृपला लता। चकारात्तृफतेरपि कलः। तृफला च फलत्रिके। तथा च त्रिफलाशब्दसमानार्थस्तृफलाशब्द इति द्विगोरित्यत्र रक्षितः। तृफला त्रिफला च। शब्दभेदः २८, इति विश्वः॥ बाहुलकात्कसु कान्तौ। मडि भूषायाम्। कुडि दाहे। पट गतौ। छो छेदने॥ एभ्योऽपिभवति। कमलं पद्मम्॥ कमलं सलिले ताम्रे जलजे चापि भेषजे। मृगप्रभेदे कमलः कमला श्रीवरस्त्रियोः लान्ते ५२,। इति स एव। अर्धर्चादिः। कमलो मृगः। कमला श्रीः पतिप्रिया च॥ मण्डलं चक्राकारं देशभेदश्च। मण्डलं रक्षति माण्डलिकः। रक्षति। पा० ४, ४, ३३,। इति ठक्। गौरादित्वात् मण्डली। इवार्थेऽङ्गुल्यादिभ्यष्ठक्। माण्डलिकः॥ स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च। कुष्ठ-

प्रभेदेऽप्युपसूर्यकेऽपि क्रतुप्रभेदे शुनि मण्डलः स्यात् । लान्ते ८०, । विश्वः ॥ कुण्डलं वलये पाशे कुण्डलं कर्णभूषणे । लान्ते ७९, । इति विश्वः ॥ पटलोऽक्षिरोगः । पललो यातुधाने स्यात्पटलं छदिषि व्रजे । पिटके नेत्ररोगे च तिलके च परिच्छदे । लान्ते ५९, । इति स एव ॥ छलं व्याजः । छलन्तु स्खलिते व्याजे लान्ते १०, । इति सः ॥

शपेर्वश्च ॥ १०७ ॥

शप आक्रोशे ॥ अतः कलः स्याद्वश्चान्तादेशः । शवलः कर्बुरो मतः । अन्यतो ङीष् । पा० ४, १, ४०, । शवली । बहुव्रीहौ शवलगुः ॥

वृषादिभ्यश्चित् ॥ १०८ ॥

वृषु सेचने । कुश इति सौत्रो धातुर्वैदुष्यरोगशोर्वर्तते । पल गतौ । देवृ देवने ॥ एवमादिभ्यः कलश्चित् स्यात् । वृषलः शूद्रः । वर्षति चरति यत्र कुत्रापि । स्त्रियां वृषली । वृषं धर्मं लुनातीति वृषल इति काचिदमरटीका ॥ "कुशलं क्षेममस्त्रियामित्यमरः । कुशलो निपुणः । कुशलबर्द्धितः । विदग्धमुख० १, ४४, । इति विदग्धः ॥ कुशलवयोर्जर्द्धित इत्यर्थः ॥ पललं मांसम् । पललं तिलचूर्णे स्यात्पललं पङ्कमांसयोः ॥ पललो यातुधाने स्यात् । लान्ते ५८, । इति विश्वः ॥ देवलो धार्मिको देवांशोपजीवी च ॥ सृ गतौ बाहुलकाद्गुणः । सरलः पूतिकाष्ठे स्यादुदारावक्रयोरपि । लान्ते ५७, । इति विश्वः । सरला विरलायन्ते घनायन्ते कलिद्रुमाः ।

नशमी न च पुन्नागा अस्मिन् संसारकानने ॥ सरले ! साहसरागं परिहर रम्भोरु ! मुञ्च संरम्भम् । ६, १०, । इति भाषासमावेशी मालतीमाधवे । शषोः सः । वररुचि, २, ४३, । इति प्राकृतसूत्रात् दन्त्यसः ॥ धावतेर्बाहुलकात् ह्रस्वत्वञ्च । धावञ् जवमृजोः । धवलः । धवलः सिन्दुरे सिते । महोक्षे चाथ धवली सौरभेय्यामुदाहृता । लान्ते ६३, । इति विश्वः जातौ ङीष् ॥ स्त्रियां गुणे त्वन्तोदात्तत्वादन्यतो ङीबिति ङीष्न । धवला नीला, येन निशा शशाङ्कधवलेति प्रयोगः ॥ आकृतिगणत्वात्केवलकवलतरलानलजम्बलपेशलमर्दलादयोऽपि द्रष्टव्याः ॥ कमेर्बुक् च । कम्बलो नागराजे स्यात्सास्नावरणयोः क्रिमौ । कम्बलश्चोत्तरासङ्गे कम्बलं सलिले मतम् । लान्ते ७३, । इति विश्वः ॥ मुश खण्डने । मुशलः । मुशली गृहगोधिका । मुहुः स्वनोऽस्येति पृषोदरादित्वात् दन्त्यसोऽपि । मुसलः । मुस खण्डने । मुसलं मुशलन्तु स्यादयोग्रे मुसली मता । तालमूल्यामाखुपर्णीगृहगोधिकयोरपि । लान्ते ६५, । इति विश्वः । मुष स्तेय इत्यस्य मुषलो मूर्धन्यमध्योऽपीति वर्णदेशना । दन्त्यसकारोऽपि मुसल इत्यस्याग्रे । असितोमरकुन्तमहापट्टिशगुरुपुरुवाणमुसलम् । १३, ४७, । इति भट्टिभाषासमावेशात् । मुशलोमुषलोऽपि च । शब्दभेदे २३, । इति विश्वः ॥ कुश श्लेषणे । बाहुलकाद्गुणः । कोशलो देशविशेषः । वृद्धेत्कोशलेति । पा० ४, १, १७१, । आङ् ।

कौशल्ययासावि सुखेन रामः । १, १४, । इति भट्टिः । मलयकेकयकौशलशासिनाम् । ९, २२, । इति रघुः ॥ लङ्के-वृद्धिश्च । लाङ्गलं हलम् । लाङ्गली बलभद्रः ॥ कदि आ-ह्वाने । नलोपः । गौरादित्वान्ङीष् । कदली । एतस्याः फलं कदलम् ॥ कुटिकशिकौतिभ्यः प्रत्ययस्य मुट् ॥ कुट्-मलम् । कुडेरपि । कुड्मलो मुकुलोऽस्त्रिया मित्यमरः ॥ गुणः । कौमलमिति मृदुले जले ॥ कश्मलमिति कलुषम् । कश गतिशातनयोश्चौरादौ पठ्यत इति नाभ्यस्तस्याचौत्यादौ सूत्रे न्यासः ॥ पिजि हिंसायाम् । न्यङ्क्वादित्वात्कुत्वम् । पिङ्ग-लो वर्णभेदः ॥ सम्ब सम्बन्धे । शम्ब च । चक्क व्यथने । एभ्यः कलः । सम्बलम् । शम्बलम् । चक्कलमित्युपाध्यायसर्वस्वम् ॥

मृजेष्टिलोपश्च ॥ १०९ ॥

मृजूष् शुद्धौ ॥ अतः कलो धातोष्टिलोपश्च । मलं वर्च-स्कपापयोः । सह मलेन वर्तत इति समलः सपापः । निर्म-लो निःपापः । मलं किट्टे पुरीषे च पापे च कृपणे मलः । लान्ते ८, । इति विश्वः ॥

चुपेरच्चोपधायाः ॥ ११० ॥

चुप मन्दायां गतौ ॥ अतः कलः । उपधाया उकार-स्याकारः । चपलं चणिकं शीघ्रं चपला पिप्पली तड़ित् ॥

शकिशम्योर्नित् ॥ १११ ॥

शकॢ शक्तौ । शमु उपशमे ॥ अतः कलो नित्त्वति ।

शकलं खण्डे वा पुंसि रोहितादीनां त्वगपि। तद्योगाच्छकली मत्स्यः॥ शमलमशुचि॥

**छो गुक् ह्रस्वश्च॥ ११२॥**

छो छेदने॥ अतः कलप्रत्ययो धातोर्गुगागमो ह्रस्वश्च छगलश्छागः। प्रज्ञादित्वात् छागलः। भवेत्तु छगलश्छागे छगली छागमातरि। लान्ते ६१,। इति विश्वः॥

**ञमन्तात् डः॥ ११३॥**

ञमिति प्रत्याहारः। ञमन्ताद्धातोर्डः स्यात्। बहुलवचनादित्संज्ञाभावः॥ दमु उपशमे। दण्डो लगुडकालयोः। दण्डोऽस्त्री लगुडेऽपि चेत्यमरः॥ रमु क्रीडायाम्। रण्डा मृतधवा नारी रण्डा मूषिकपर्णिका॥ खनु अवदारणे। खण्डो गुडप्रभेदः स्यात् खण्डः शकलभेदयोः। अर्धं खण्डं खण्डः॥ मनु ज्ञाने। मण्डोऽस्त्री सर्वरसाग्र इति सर्वस्वम्। मण्डा धात्र्यामुदीरिता। डान्ते १६,। इति विश्वः॥ वन सम्भक्तौ। वण्डश्छिन्नहस्तकः॥ अम गत्यादिषु। अमन्ति सम्प्रयोगं यान्त्यनेनेत्यण्डः प्राण्यङ्गावयवः। अण्डो मुष्कअण्डिकाः॥ षणु दाने। बहुलवचनान्नत्वाभावः। षण्डो काननगोपतौ। षण्डः सङ्घात इष्यते॥ शडि रुजायाम्। अस्मात्तु घञि शण्डशब्दस्तालव्यादिमानपि वर्तत इति देशना। अब्जादिकदम्बे शण्डमस्त्रियामित्यमरः। पद्मशण्ड इति धातुप्रदीपः॥ गम्लृ गतौ। गण्डो व्याधिकपोलयोः। गण्डः कपोले पिटके च। डान्ते ८,। इति विश्वः॥ चण

दाने । चण्डो दैत्यान्तरे तीव्रे चण्डो दासे यमस्य च । चण्डी कात्यायनीहिंस्रकोपनस्त्रीषु सम्मता । डान्ते ८, । इति विश्वः ॥ पण व्यवहारे । पण्डः क्लीबे । मतिः पण्डा । पण्डा बुद्धिर्विदा प्रज्ञेति भागुरिः । तारकादित्वादितच् । पण्डितः ॥ फण गतौ । फण्डः । प्रज्ञादित्वादण् । फाण्डमुदरम् अत्र ञमि ञकारेण प्रत्याहारग्रहणसामर्थ्यात् ञकारान्तः सौत्रो धातुरूह्यत इति ञ म ङ ण नम् इत्यत्र सूत्रे रक्षितः ॥

## क्वादिभ्यः कित् ॥ ११४ ॥

कवर्गादिभ्यो धातुभ्यो डः किद्भवति ॥ कुप शब्दोपकरणयोः । कुण्डः स्यात्पतिवत्नीनां जारसञ्जनितः सुतः । देवताम्ब्वजलाधारः कुण्डं कुण्डमुखा स्मृतेति शाश्वतः । उपचारात्ताम्रकुण्डम् । स्वार्थे कनि स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति कुण्डिका । अमृते जारजः कुण्डो मृते भर्तरि गोलकः । गुङ् अव्यक्ते शब्दे । गुडो गोलेक्षुपाकयोरित्यमरः । गुडा स्नुही । गुडाप्रायाः केशा अस्येति गुडाकेशः शिवः ॥ घुण भ्रमणे । घुण्डो भ्रमरः ॥ कमु कान्तौ । दीर्घत्वम् । काण्डं वावसरे वाणे वर्गे स्कन्धे च शाखिनाम् । प्रमाणविशेषेऽपि काण्डम् । यथा त्रिकाण्डम् । काण्डं नाले तरुस्कन्धे वाणेऽवसरनीरयोः । डान्ते १८, । इति विश्वः । निदित्यनुवृत्तेः कुण्डादिशब्दा आद्युदात्ता इति चेप इत्यत्र सूत्रे न्यासः ॥

## स्थाचतिमृजेरालज्वालञ्चालीयचः ॥ ११५ ॥

ष्ठा गतिनिवृत्तौ। चते याचने। सृजृष् शुद्धौ॥ एभ्यो यथाक्रममालच् वालञ् आलीयच् इत्येते प्रत्ययाः स्युः। स्थालं भाजनभेदे स्यादुखा स्थाली प्रकीर्त्तिता। गौरादित्वात् ङीष्। लचि सिद्ध आलज्विधानं चिन्त्यम्। घुमास्थेत्यस्याक्ङित्यपि क्वचित्प्रवृत्तौ ज्ञापकमिति केचित् चित्त्वं बाधित्वा पच्च आद्युदात्तार्थमित्यपरे॥ चात्वालो यज्ञोपकरणम्। चात्वालो यज्ञकुण्डे स्यात् दर्भे चोत्ताल उत्कटे। लान्ते ११७,। इति विश्वः॥ मार्जालीयो विडालः स्यात्॥

पतिचण्डिभ्यामालञ्॥ ११६॥

पत्लृ गतौ। चडि कोपे॥ पतन्त्यस्मिन्नधर्म्मेण॥ पातालमधोभुवनम्॥ चण्डालः पापकर्मा। चण्डमलं भूषास्येत्यपि चण्डालः। प्रज्ञादित्वादणि चाण्डाल इत्यपि॥

तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन्॥ ११७॥

तमु काङ्क्षायाम्। विश प्रवेशने। विड आक्रोशे। मृण हिंसायाम्। कुल संस्याने। कपि चलने। निर्देशान्नलोपः। पल गतौ। पचि विस्तारवचने॥ एभ्योऽष्टधातुभ्यः कालन् स्यात्। तमालो वृक्षभेदः स्यात्॥ विशालो महान्। त्रिलिङ्गः। विशालं बृहदाख्यातम् विशालोज्जयिनी पुरी। लान्ते ११८,। इति विश्वः। विशालोज्जयिनी प्रोक्ता पुरी च.न्या च मानिनीति कोशान्तरम्। तमिच्छति नृपं बुद्धया यः स्तोतुमविशालया। स वाञ्छत्यातपत्राणं करिणामविशा-

स्येति कीचकवधः ॥ विडालो मार्जारः स्त्रियां विडाली ॥ मृणालं पद्ममूलम् । पुष्करादित्वान्मृणालिनी । अल्पाख्यायां मृणाली ॥ कुलालः कुम्भकारः स्यात् ॥ कपालं नरशिरः । पुन्नपुंसकम् । कपालं नृशिरोऽस्थि स्यात् घटादेः शकले व्रजे । लान्ते १०२, । इति विश्वः ॥ पलालोऽस्त्री स निष्फल इत्यमरः । पलालं भराय ते ॥ पञ्चालो जनदेशयोः । पृषोदरादित्वात् दीर्घत्वे पाञ्चाल इत्यपि ॥ बहुलवचनात् शतेरपि कालन् । शाला । विभाषा सेनासुरेति वा क्लीवम् । पा० २, ४, २५, । गोशालम् गोशाला । चतुःशालम् चतुःशाला । शल चलने । घजन्ता तत्पुरुषे शालायामिति निपातनात् स्त्रीत्वे शालेति न्यासः ॥

पतेरङ्गच् पक्षिणि ॥ ११८ ॥

पत्लृ गतौ ॥ अस्मात्पक्षिण्यभिधेयेऽङ्गच् । पतङ्गः पक्षी । कथं पतङ्गः सूर्यः । खग इत्युपमान्यपचारात् । पतङ्गः शलभे सूर्ये पतङ्गः पक्षिणि स्मृत इति कोशान्तरम् । पतङ्गः शलभे शालिप्रभेदे विहगे रवौ । गान्ते ४१, । इति विश्वः ॥

तरत्यादिभ्यश्च ॥ ११९ ॥

तरत्यादिभ्योऽप्यङ्गच् । तरङ्ग ऊर्मिः । तरङ्गस्तुरगादीनामुत्फाले वस्त्रभङ्गयोरिति सः ॥ लुनातेर्लवङ्गं देवकुसुमे ॥ आकृतिगणोऽयम् । एवमन्येऽपि द्रष्टव्याः ॥

विडादिभ्यः कित् ॥ १२० ॥

विड आक्रोशे । मृद क्षोदे । कु विक्षेपे ॥ एभ्योऽङ्गच्

क्विन्नवति । विडङ्ग ओषधिविशेषः ॥ मृदङ्गो मर्दलः । वाद्यविशेषः ॥ बाहुलकादुत्वं रपरत्वञ्च । कुरङ्गो मृगः । स्त्रियां कुरङ्गी ॥

सृवृञोर्वृद्धिश्च ॥ १२१ ॥

सृ गतौ । वृञ् वरणे ॥ आभ्यामङ्गच् धातोर्वृद्धिश्च । चातके हरिणे पुंसि सारङ्गः शबले त्रिषु । अम० ३.४,३,२४ । नदति जलदैर्निदाघे सारङ्गोऽपास्ते बिभ्रति केतकमवनेः सारङ्गोपास्ते । सम्प्रत्युद्यमकालो न वाहिनीपानां त्वन्मुखसुरभीणां श्रीनवा हि नीपानाम् । ५० इति वृन्दावनयमकम् । सारङ्ग सङ्कुलमहासालम् । १२, ३८ ॥ इति भट्टिभाषासमावेशः । अन्ये तु शॄ हिंसायामित्यस्मादङ्गचि वृद्धौ च शारङ्ग इति तालव्यमाहुः । प्रमाणं तु चिन्त्यम् । सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे । पक्षिभेदे च सारङ्गः सारङ्गः शबलेऽन्यवत् । गान्ते ४९, । इति विश्वः ॥ वारङ्गः खड्गादिमुष्टिः ॥ बाहुलकात् णॄ नये । नारङ्गो नागरङ्गक इति कोशान्तरम् ॥

गन् गम्यद्योः ॥ १२२ ॥

गम्लृ गतौ । अद भक्षणे ॥ आभ्यां गन् । गङ्गा विष्णुपदी ख्याता । अपत्ये शिवादितिकादिशुभ्रादिपाठात् अणि फिञि ठकि च गाङ्गो गाङ्गायनिर्गाङ्गेयः ॥ अङ्गः पुरोडाशः ॥ अम गत्यादिषु । बाहुलकादतोऽपि भवति । अङ्गं गात्र

उपाये च प्रतीके चाप्रधानके । अङ्गो देशविशेषः स्यादङ्ग सम्बोधनेऽव्ययम् । विश्व० गान्ते १४, ॥

छापूखडिभ्यः कित् ॥ १२३ ॥

छो छेदने । पूञ् पवने । खड भेदे ॥ एभ्यो गन् किद्भवति ॥ छायते यज्ञार्थिभिरिति छागश्छागलः ॥ पूयते सुखमनेनेति पूगो गुवाकः । पूगः क्रमुकवृन्दयोरित्यमरः ॥ खड्गो गण्डकशृङ्गे स्यान्निस्त्रिंशे गण्डकोऽपि चेति शब्दतरङ्गिणी । खड्गो गण्डकशृङ्गासियुद्धभेदेषु गण्डके । विश्व गान्ते २४, । इति कोशान्तरम् । बाहुलकात् षिट अनादरे । अतोऽपि गन् सत्वाभावश्च । स्मृतः षिडगस्तरलमना इति चन्द्रः । षिड्गैरगद्यत ससम्भ्रममेवमेका । ५, ३४, । इति माघः ॥

भृञः कित् नुट् च ॥ १२४ ॥

भृञो गन् किद्भवति । नुडागमोऽपि तस्य । भृङ्गः षिडगालिधूम्याटाः । भृङ्गो धूम्याटषिड्गयोः । मधुव्रते च भृङ्गं तु केशराजगड्वचोः । गान्ते १८, । इति विश्वः । किदित्यनुवृत्तेः किदिति विस्पष्टार्थम् ॥

शृणातेर्ह्रस्वश्च ॥ १२५ ॥

शॄ हिंसायाम् ॥ अतो गन् । धातोर्ह्रस्वत्वं कित्त्वं नुट् च प्रत्ययस्य । शृङ्गं विषाणमाख्यातं शैलाग्रे जलयन्त्रके सौनौषधिसुवर्णानां भेदे शृङ्गो प्रयुज्यत इत्युत्पलिनी । गौरादित्वात् ङीष् । शृङ्गं क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः

स्यात्कूर्चशीर्षके । शृङ्गी विषःस्यामृषभे स्वर्णमीनप्रभेदयोः । ग.न्ते २१ । इति विश्वः । मत्वर्थेऽपि शृङ्गमस्यास्तीति शृङ्गारकः । शृङ्गवृन्दाभ्यामारकन् । पा० ५, २, १२२, ४ । विकारार्थेऽपि शार्ङ्गः कार्मुकमात्रेऽपि विष्णोरपि शरासने । अथ सुललितयोषिद्भ्रूलताचारुशृङ्गम् । कु० सं० २, ६४, । इति च प्रांशुत्वादायतत्वादुपचारात् ॥

गण् शकुनौ ॥ १२६ ॥

शृणातेरेव शकुनौ वाच्ये गण्प्रत्ययः । पूर्ववन्नुट् च । शाङ्गः पक्षी । केचित्पुनरगश्चित्यकारपूर्वो गकार इत्यादावकारो विधीयते । तेन शारङ्ग इत्यपि साधुरिति सर्वस्वम् ॥

मुदिग्रोर्गग्गौ ॥ १२७ ॥

मुद हर्षे । गॄ निगरणे । आभ्यां यथासङ्ख्यं गक् ग इत्येतौ स्याताम् । मुद्गः सस्यभेदः । मुद्गान् लातीति मुद्गलो मुनिः । यस्य मौद्गल्य आत्मजः ॥ गर्गो मुनिः । गार्ग्यो यस्यात्मसम्भवः ॥

अण्डन् कृसृभृवृञः ॥ १२८ ॥

डुकृञ् करणे । सृ गतौ । भृञ् भरणे ॥ वृञ् वरणे । एभ्योऽण्डन् । करण्डः करण्डिका । पुष्पभाण्डभेदः करण्डी ॥ सरण्डः पक्षी ॥ भरण्डः स्वामी ॥ वरण्डो मुखरोगः । वरण्डोऽप्यन्तरावेदौ सन्दोहमुखरोगयोः । डान्ते २७, । इति विश्वः । प्राक् प्रत्ययनिर्देशादन्यतोऽपि भवति । तेन तर-

तेस्तरण्डो जलतरङ्गम्। तरण्डो वलिशोसूत्रबद्धवस्तुनि भेलके। डान्ते २७,। इति सः। वनतेस्तकारान्तादेशः। वतण्ड इति का चिद्वृत्तिः॥ तथा क्षमु अदने। अत एत्वम्। क्षेमण्डो मातापितृशून्यः। तथा शेतेरपि। शयण्डो विषयो देश इति तु वृत्तौ। ऐशु काश्यादित्वाज्ञतल्प्रत्यये शयण्डभक्तः।

शृदृभसोऽदिः १२९॥

शॄ हिंसायाम्। दॄ विदारणे। भस भर्त्सनदीप्तयोः॥ एभ्योऽदिः स्यात्। शरत् सम्वत्सर ऋतौ॥ दरत् हृदयकूलयोः॥ भसत् जघनम्। भसत् प्रभास्वरे मासे तरत्कारण्डवे प्लवे। गान्ते ३४,। इति विश्वः। पर्ष स्नेहने। बहुलवचनाददतोऽपि भवति। समज्या पर्षत्परिषदिति चन्द्रः। पर्षद्वलान्महाब्रह्मैः। ४, १२,। इति भट्टिः। परिपूर्वात्सदेः सत्स्वित्यादिना। पा० ३, २, ६१,। क्विप्। सदिरप्रतेः। पा० ८, ३, ६६,। इति षत्वम्। रजःकृषीति। पा० ५, २, ११२,। वलच्। यः सम्प्रति प्राक् परिषद्वलानामिति कोशः॥

दृणातेः षुक् ह्रस्वश्च॥ १३०॥

दॄ विदारणे॥ अतोऽदिः स्यात् ह्रस्वत्वञ्च धातोः षुगागमश्च। दृषत् शिला। राजदन्तादित्वात् दृषदुपलम्। शेषे। पा० ४, २, ९२,। इति लक्षणं वाधिकारस्येति दृषदि पिष्ट। इत्यस्मिन्नर्थे दार्षदाः सक्तव इति का चिद्वृत्तिः।

**त्यजितनियजिभ्यो डित् ॥ १३१ ॥**

त्यज हानौ । तनु विस्तारे । यज देवपूजादौ । एभ्योऽदिर्डिद्भवति । टिलोपः । त्यद् । त्यदाद्यत्वम् । तदोः सः सावनन्त्ययोः । पा० ७, २, १०६, । इति सत्वम् । स्यः । त्यौ । त्ये । अहं वा न भविष्यामि स्य वा कम्बलविक्रयीति । एवं तद्यदौ । सर्वनामसंज्ञका एव ॥

**एतेस्तुट् च ॥ १३२ ॥**

इण् गतौ ॥ अतोऽदिः स्यात्तस्य तुडागमः । एतद् । सर्वनामैव ॥

**सर्तेरटिः ॥ १३३ ॥**

सृ गतौ ॥ अतोऽटिः स्यात् । इकार उच्चारणार्थः । सरट् स्याद्वात मेघयोः । सरडिति धातुपारायणे दृश्यते ॥

**लङ्घेर्नलोपश्च ॥ १३४ ॥**

लघि शोषणे ॥ अस्मादटिर्नलोपश्च धातोः । लघट् वायुः । लघटिरिति पारायणे ॥

**पारेरजिः ॥ १३५ ॥**

पार तीर कर्मसमाप्तौ ॥ अतश्चुरादेरजिः । णिलोपः । पारक् सुवर्णम् ॥

**प्रथः कित्सम्प्रसारणञ्च ॥ १३६ ॥**

प्रथ प्रख्याने ॥ अस्मादजिः किद्भवति सम्प्रसारणञ्च धातोः । कुत्वादिकार्यम् । पृथक् नानार्थः । स्वरादित्वादव्ययत्वम् ॥

**भियः षुक् ह्रस्वश्च ॥ १३७ ॥**

बिभेतेरजिः किद्वति षुगागमश्च ह्रस्वत्वञ्च ॥ भिषग्वैद्यः । अपत्ये गर्गादित्वाद्यञि भैषज्यः । भिषजामिदमित्यणि सुमङ्गलभेषजाच्च । पा० ४, १, ३०, । इति निपातनाद्गुणे भेषजम् । स्वार्थेऽनन्तावसथेतिहभेषजाञ्ञ्यः । पा० ५, ४, २३, । इति भैषज्यम् भेषजमेव ॥

युष्यसिभ्यां मदिक् ॥ १३८ ॥

युष इति सौत्रो धातुः । असु क्षेपणे ॥ आभ्यां मदिक् । युष्मदस्मदसौ । त्वाहौ सौ । शेषे लोपः । पा० ७, २, ९०, ९४, । त्वम् । अहम् ॥

अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो-मन् ॥ १३९ ॥

ऋ गतौ । ष्टुञ् स्तुतौ । षुञ् अभिषवे । हु दाने । सृ गतौ । धृञ् धारणे । क्षि क्षये । टुक्षु शब्दे । भा दीप्तौ । या प्रापणे । वा गतिगन्धनयोः । पद गतौ । यक्ष पूजायामाकुस्मीयः । णीञ् प्रापणे ॥ एभ्यश्चतुर्दशधातुभ्यो मन् । अर्मश्चक्षूरोगः ॥ स्तोमः सङ्घातः । अग्नेः स्तुत्स्तोमसोमाः । पा० ८, ३, ८२, । इति षत्वम् । अग्निष्टोमः । ज्योतिरायुषः स्तोमो ज्योतिष्टोमः । आयुष्टोमः ॥ सोमः कर्पूरचन्द्रयोः । सोम इव सौम्यः । शाखादित्वाद्यः । पृषोदरादित्वादौत्वम् । प्रीतास्मि ते सौम्य ! चिराय जीव । १४, ५९, । इति रघुः ॥ होमो यागविशेषः ॥ सर्मो गमनम् ॥ धर्मः स्यादस्त्रियां पुण्ये । धर्मं चरतीति ठक् । धार्मिकः । नञ्समासेऽधर्मा-

चेति ठग्वक्तव्यः । पा० ४, ४, ४१, १, । आधर्मिकः ।
स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः । धर्मः पुण्ये यमे
न्याये स्वभावाचारयोः क्रतौ । मान्ते १८, । इति विश्वः ॥
क्षेमं कुशलमस्त्रियामित्यमरः । क्षेमप्रियमद्रेऽण् च । पा०
३, २, ४४, । क्षेमङ्करः । गौरादित्वात् क्षेमङ्करी । पचा-
दिषु करट्शब्दपाठात् योगक्षेमकरी लोकस्येत्यन्ये ॥ क्षौमं
वस्त्रप्रभेदः स्यात् । क्षौमं पट्टे दुकूले स्यादतसीकुसुमेऽपि
च । मान्ते ६, । इति विश्वः । त्यजती मङ्गलक्षौमे चीरे
च प्रतिगृह्णत इति रघुः । शणभवे क्षौमश्च । अतसी स्या-
दुमा क्षुमा । अम० २, ९, २०, । इति क्षुमाशब्दाद्विकारेऽ-
णिति ॥ भाम आदित्यः । भामः क्रोधे रवौ दीप्तौ । मान्ते
१६, । इति विश्वः ॥ यामः प्रहरः । द्वौ यामप्रहरौ समौ ।
अम० १, १, ३, ६, ॥ वामः शोभनदुष्टयोः । शौण्डादित्वा-
दत्त्ववामः ॥ पद्मं सरोरुहम् । अर्धर्चादिरयम् । वा पुंसि
पद्मं नलिनमित्यमरः । पद्मः स्यान्निधिशङ्खयोः । शङ्खपद्मौ
निधौ चित्रे दृष्ट्वा दुष्टैर्विमुच्यत इति पुराणम् । पुष्करादि-
भ्यो देशे । पा० ५, २, १३५, । इतीनिः । पद्मिनी । अर्श-
आदित्वादच् । पद्मा हरिवधूः स्मृता ॥ यक्ष्मो रोगराजः ।
राजयक्ष्मेव रोगाणाम् । २, ९६, । इति माघः । मनिनन्तो-
ऽप्यस्ति । यक्ष्मणापि परिहानिराययौ कामयानसमवस्थया
तुलाम् । १९, ५०, । इति रघुः ॥ नेमः प्राकारमूलम् ।
अर्धवाची तु सर्वनामसंज्ञक इति ॥

जह्रातेः सन्वदालोपश्च ॥ १४० ॥

जह्रातेर्मन् सन्वद्भवति धातोराकारलोपश्च । जिह्मः कुटिलमन्दयोः । जिह्मं तगरपादपे । मान्ते १८, । इति विश्वः ॥

अवतेष्टिलोपश्च ॥ १४१ ॥

अव रक्ष पालने ॥ ततो मन् टिलोपश्च । स च सामर्थ्यात्प्रत्ययस्यैव न प्रकृतेः । अन्यथा हि डिदित्येवोच्येत । ज्वरत्वरेत्यादिना । पा० ६, ४, २०, । वकारस्योपधायाश्चोठ् । द्वयोरूठोर्दीर्घत्वे कृते गुणः । ओमित्यनुमतौ प्रोक्तं प्रणवे चाप्युपक्रमे । विश्व० अव्य० ४८, । मन्त्राङ्गत्वाच्छान्दसोऽननुनासिकः । ओमित्युक्तवतोऽथ शार्ङ्गिणः । १, ७५, । इति माघः । ओङ्कारप्रणवौ समावित्यमरः । चादित्वादव्ययत्वम् ॥

ग्रसेरात् ॥ १४२ ॥

ग्रसु अदने ॥ अतो मन् । धातोराकारान्तादेशः । ग्रामः संवसथः प्रोक्तः सम्पूर्वः स्वरे स्मृतः । गहादित्वाच्छः । एकग्रामीयः । ग्रामाद्यखञौ । पा० ४, २, ९४, । ग्राम्यः । ग्रामीणः । ग्रामः स्वरः संवसथे वृन्दे शब्दादिपूर्वकः । मान्ते १४, । इति विश्वः ॥

अविसिविसिशुषिभ्यः कित् ॥ १४३ ॥

अव रक्षणे । षिवु तन्तुसन्ताने । षिञ् बन्धने । शुष शोषणे ॥ एभ्यश्चतुर्भ्यो मन् भवति स च कित् । पूर्ववदूठा-

द्विकार्यम् । उमं नगरम् । टापि बाहुलकात् क्रस्वत्व उमा दुर्गातसी स्मृता । उ मेति माचा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम । कु० सं० १, २६, । इत्युपाद्यान्तरम् । उमातसीहैमवतीहरिद्राकान्तिकीर्तिषु । मान्ते ३२, । इति विश्वः ॥ स्यूमो रश्मिः ॥ सिमः सर्वनाम सर्वपर्यायः । सिमस्मै । सिमस्मात् ॥ शुष्ममग्निसमीरयोः ॥

## इषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥ १४४ ॥

इष गतिहिंसादानेषु । युध सम्प्रहारे । ञिइन्धी दीप्तौ । दसु च । श्यैङ् गतौ । धूञ् कम्पने । षूङ् प्राणिगर्भविमोचने ॥ एभ्यः सप्तभ्यो मक् । इष्मः कामवसन्तयोः । केचिदीष गताविति पठन्ति । तेषां दीर्घादिरीष्मः ॥ युध्मः शरः इध्मः समित् ॥ दस्मो यजमानः ॥ श्यामो हरितकृष्णयोरित्यमरः । श्यामः स्यान्मेचके वृद्धदारके हरिते घने । वटद्रुमे प्रयागस्य श्यामः श्यामा तु वागुजी ॥ अप्रसूताङ्गनायाश्च तथा श्यामलतौषधे । त्रिवृत्कासारिकागुन्द्रानिशाकृष्णाप्रियङ्गुषु ॥ श्यामा नील्यां पिके श्यामं मरिचे लवणान्तरे । मान्ते १०, । इति विश्वः ॥ धूमः स्यादग्निसम्भवः । पामादित्वात् धूम्या धूमसंहतिः ॥ सूमोऽन्तरिक्षम् ॥ ईर गतौ । बाहुलकादतोऽपि मक् । ईर्मं व्रणम् । व्रणोऽस्त्रियामीर्ममरुः क्लीव इत्यमरः ॥ टुक्षु शब्दे । क्षुमातसी । तस्या विकारः क्षौमं वस्त्रभेद इत्युक्तम् ॥ जन जनने । जन्म उत्पत्तिः । जन्मस्तु पुंसि सम्भव इति पुंसि

प्रयोगः। मनिनन्तोऽप्यस्ति। रुह जन्मनीति धातुपाठात्। जनुर्जननजन्मानि। अम० १, १, ४, ८,। इत्युभयथाप्युपपद्यते॥

युजिरुचितिजां कुश्च॥ १४५॥

युजिर् योगे। रुचि दीप्तौ। तिज निशाने॥ एभ्यो मक् कवर्गश्चान्तादेशः। युग्म युगलम्॥ रुक्मो वर्णभेदः। तदस्यास्त्यस्मिन्निति मतुप्। तद्योगाद्रुक्मवचनेभ्यः। पा० ५, २, ९४, १,। इति मतुब्लोपे रुक्मं सुवर्णम्। रुक्मो वर्णोऽस्या अस्तीति रुक्मिणी रुक्मं तु काञ्चने लोहे। मान्ते १७,। इति विश्वः। त्वया विप्रकृतश्चैद्यो रुक्मिणी हरता हरे। २, ३८,। इति माघः॥ तिग्मं तीक्ष्णं। त्रिलिङ्ग॥

हन्तेर्हि च॥ १४६॥

हन हिंसागत्योः॥ अतो मक् धातोर्हिरादेशश्च हिम चन्दनमाख्यातं हिमं शीततुषारयोः। मान्ते ४,। इति विश्वः। हिमारण्ययोर्महत्त्वे। पा० ४, १, ४९, १,। इति ङीषानुकौ। हिमानी हिमसंहतिः॥

भियः षुग्वा॥ १४७॥

बिभेतेर्मक् धातोर्वा षुगागमश्च। बिभेत्यस्मादिति भीमस्त्रिलिङ्गः। भीमो भयानके ख्यातो भीमो पाण्डवशङ्करौ॥ भीष्मो भयानके च्चत्रे। भीष्मं भयानके त्रिषु। भीष्मः कुरूणां भयशोकहर्तेति। भीष्मस्तु भीषणे रुद्रे गाङ्गेये च निशाचरे। मान्ते २०,। इति विश्वः॥

घर्मः ॥ १४८ ॥

घर्म इति निपात्यते ॥ घृ क्षरणदीप्त्योः। अतो मग्गुणौ निपात्येते। घर्मः स्वेदाम्भसि ग्रीष्मे। घर्मः स्यादातपे ग्रीष्म उष्णस्वेदाम्भसोः। मान्ते १९,। इतिसः ॥

ग्रीष्मः ॥ १४९ ॥

ग्रीष्म इति निपात्यते ॥ ग्रसु अदने। अतो मक् ग्रीभावश्च धातोः षुगागमश्च। ग्रसते रसानिति ग्रीष्मः कालभेदः ॥

प्रथेः षिवन् सम्प्रसारणञ्च ॥ १५० ॥

प्रथ प्रख्याने ॥ अतः षिवन् सम्प्रसारणञ्च धातोः। षकारो ङीषर्थः पृथिवी मही। षित्त्वादेव ङीषि सिद्धे गौरादावपि पृथिवशब्दपाठोऽनुबन्धकानित्यत्वज्ञापनार्थः। तेन दंष्ट्रेति सिद्धं भवति। उत्सादित्वात्पार्थिवः। षवन्नित्येके। पृथवी पृथिवी पृथ्वी धरा सर्वंसहा रत्नेति शब्दार्णवः ॥

अशू प्रुषिलटिकणिखटिविशिभ्यः क्वन् ॥ १५१ ॥

अशू व्याप्तौ। प्रुष स्नेहनादौ। लट बाल्ये च। कण निमीलने। खट काङ्क्षायाम्। विश प्रवेशने ॥ एभ्यः क्वन्। अश्वः घोटकः। अश्वः पुंसि इव वाजिनः। वान्ते १८,। इति सिंहः। अश्वशब्दो वक्रावपि दृश्यत इत्युणादयो बहुलमित्यत्रानुन्यासः। अजादित्वात्स्त्रियामश्वा। अश्वादिभ्यः फञ्। पा० ४, १, ११०,। आश्वायनः ॥ प्रुष्वः स्यादृतुसूर्ययोः। प्रुष्वा जलकणिकेति रत्नमतिः। अटट्टाशीकेति क्यङ्। पा० ३, १, १७, १,। प्रुष्वायते ॥ लट्वा पक्षिभेदः। लट्वा स्या-

त्तुलिका शिलीति हारावली। लट्वा तु तूलिका ख्याता लट्वा युतेऽपि दृश्यत इति व्याडिरभसौ। लट्वा करञ्ज-भेदे स्यात् फले वाद्ये खगान्तरे वान्ते २५,। इति विश्वः॥ कण्वं पापे मुनौ विदुः। बाहुलवचनादित्वम्। किण्वमिति सर्वस्वम्। किण्वं पापे सुराबीजे। तान्ते १६,। इति विश्वः॥ शयनार्थिभिः काङ्क्ष्यत इति खट्वा शय्याभेदः॥ विश्वं जगत्। विश्वं समस्तजगतोर्विश्वे देवेषु नागरे। विश्वा चातिविषायां स्यात्। वान्ते १८,। इति सः। विश्वं स्तोक्तो-क्तयोः पुंयामित्यमरः। विश्वस्य वसुराटोः नरे संज्ञायाम्। मित्रे चर्षौ। पा० ६, ३, १२८—१३०,। इति पूर्वपदस्य दीर्घः। विश्वावसुः। विश्वाराट्। विश्वानरः। विश्वामित्र इति॥

इण्शीङ्भ्यां वन्॥ १५२॥

इण् गतौ। शीङ् स्वप्ने॥ आभ्यां वन्। एवावधारणे। एवावधारणेऽप्यर्थे। एवे चानियोगे। पा० ६, १, ९४, ४,। इति पररूपं वक्तव्यम्। अद्येव॥ शेवं मेढ्रम्॥

सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे॥ १५३॥

सर्वादयो वन्प्रत्ययान्ता निपात्यतेऽतन्त्रेऽकर्तरि॥ सृ गतौ। सर्वं निरवशेषम्। त्रिलिङ्गम्। सर्वस्त्वे तु सर्वतः सर्वश इति व्युत्पादितः॥ घृषु सङ्घर्षे निपूर्वः। गुणाभावः। निघृष्वं खुरं प्राहुः। निघृष्वं खुरमार्जनम्॥ रिषु हिंसायाम्। रिष्वो हिंस्रः॥ लष कान्तौ। लष्वो नर्तकः॥ शीङ् स्वप्ने। क्ष-

खलम्। शेतिश्च तिष्ठतौ जलाशयवत्। शेते तिष्ठति नन्द-दतिभ्यां न विक्रियते गुणावस्थारहितः शान्तः शिवः शम्भुः। शिवं भद्रं शिवः शम्भुः शिवा गौरी शिवाभया। शाश्वत, १, १,। शिवं मोक्षे सुखे भद्रे सलिलेऽथ शिवो हर इति कोशान्तरम्। शिवः शम्भुः शिवं मोक्षे सलिलेऽथ शिवो हरे। अभयामलकीगौरीक्रोष्ट्रीसत्तुफलासु च। शिवा काटामलौषधौ। वान्ते ८,। इति विश्वः॥ पद गतौ॥ पद्वो भूलोकः॥ ओहाक् त्यागे प्रपूर्वः। आलोपः। प्रह्वो नम्रः। त्रिलिङ्गः॥ ईषेर्वन्। ईष्व आचार्य्यः॥ अतन्त इति किम्। सर्तां सारकः॥ ऋस शब्दे। बाहुलकादतोऽपि वन्। ऋस्वः खर्वैकमात्रयोः। पृथ्वादित्वात् ऋसिमा। ऋस्वं लिङ्गत्रये ज्ञेयं लघु नपुंसके। ऋस्वसमेत्यशाला च। पा० २, ४, २४,। इत्यत्र न्यासकृत्॥

शेवायह्वजिह्वाग्रीवाप्वामीवाः॥ १५४॥

शेवादयो वन्प्रत्ययान्ता निपात्यन्ते॥ शीङ् स्वप्ने। शेवा लिङ्गाकृतिः॥ यज देवपूजादौ। जकारस्य हकारः। यह्वो यजमानः॥ जि जये। हुगागमः। जिह्वा रसना॥ गॄ निगरणे। ग्रीभावश्च। ग्रीवा शिरोधरा। बहुव्रीहिस-मासे दशग्रीवग्रीवौ। ग्रीवाभ्योऽण् च। पा० ४, ३, ५७,। इत्यण्ढञौ। ग्रैवम्। ग्रैवेयम्। कुलकुक्षीति ढकञ्। पा० ४, २, ८६,। ग्रैवेयकं कण्ठभूषेत्यमरः॥ आप्लृ व्याप्तौ। आप्वा कण्ठस्थानम्॥ मीङ् हिंसायाम्। मीवोदरक्रिमिः॥

कॄगॄशॄदॄभ्यो वः ॥ १५५ ॥

कॄ विक्षेपे । गॄ निगरणे । शॄ हिंसायाम् । दॄ विदारणे ॥ एभ्यो वः स्यात् । इटि प्राप्ते नेड्वशि कृति । पा० ७,२,८, । इतीट्प्रतिषेधः । कर्वः कामः ॥ गर्वोऽहङ्कारः ॥ शर्वः शिवः । इन्द्रवरुणेति । पा० ४, १, ४९, । ङीषानुकौ । शर्वाणी गौरी ॥ दर्वो राक्षसः ॥

कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः ॥ १५६ ॥

यु मिश्रणे । वृषु सेचने । तक्षू त्वक्षू तनूकरणे । राजृ दीप्तौ । धवि गत्यर्थः । द्यु अभिगमने । दिवु क्रीडादौ प्रतिपूर्वः ॥ एभ्यः सप्तभ्यः कनिन् स्यात् । युवा तरुणः । यूनस्तिः । पा० ४, १, ७७, । युवतिः । कृदिति ङीष् । युवती ॥ वृषेन्द्रः ॥ तक्षा वर्धकिः ॥ प्रकृती रञ्जयतीति । राजा क्षत्रियचन्द्रयोरित्यमरः । अनेकार्थत्वात् रञ्जनेऽपि वर्त्तते । रञ्जयतीति राजा प्रभुः । तेन राजा प्रकृतिरञ्जनात् । ४, १२, । इति रघुः । स्त्रियां राज्ञी ॥ धन्वा शरासनम् । समानौ मरुधन्वानावित्यमरः । पुष्पधन्वा रतिपतिः । द्युवा सूर्यः । प्रतिदिवा दिवसः । बहुलवचनात्केवलादपि कनिन्निति । तेन दिवौकस इत्यत्र वृद्धिर्भवतीति दिव उत् । पा० ६, १, १३१, । इत्यत्र भागवृत्तिः । अन्ये कप्रत्ययान्तेन दिवशब्देनाकारान्तेन साधयन्ति । यथायं प्रयोगः । इदं पुरन्तेन विवर्जितम् वनं वनञ्च यत्तेन समन्वितं पुरम् । न शोभते तेन विनाद्य नो पुरं मरुत्वता वृत्र

वधे यथा दिश्यमिति ॥ प्राक् प्रत्ययनिर्देशादन्यतोऽपि भवति । दनुश दशने । नलोपः । दशन् ॥ णुस्तुतौ । बाहुलकाद्गुणः । नवन् ॥ अशू व्याप्तौ । षप समवाये । आभ्यां प्रत्ययस्य तुट् च । अष्टन् । सप्तन् ॥ पञ्चतेः पञ्चन् । एते दशादयः सङ्ख्याशब्दाः ॥

नञि जहातेः ॥ १५७ ॥

ओहाक् त्यागे ॥ अतो नञ्युपपदे सति कनिन् । आतो लोपः । रोऽसुपि । पा० ८, २, ६८, ६९, । इति रेफादेशः । अहर्दिनम् । अहन्निति रुत्वम् । अहोभ्याम् । अहोभिः । अहरादीनां पत्यादिषूभयथा । पा० ८, २, ७०, १, । इति रः । अहर्पतिः । अहःपतिः । अह्नो रुविधौ रूपरात्रिरथन्तरेष्वेव । पा० ८, २, ६८, २, । अहोरूपम् । अहोरात्रः । गतमहो रात्रिर्गता ॥

श्वन् उक्षन् पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्धन् मज्जन् अर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति ॥१५८॥

कनिनन्ता एते त्रयोदश शब्दा निपात्यन्ते ॥ टुओश्वि गतिवृद्ध्योः । इकारलोपः श्वा कुक्कुरः । स्त्रियां ङीप् । शुनी च गृहिणी व्याघ्रः किमन्यो जनः ॥ उक्ष सेचने । उक्षा बलीवर्दः ॥ पूष वृद्धौ । पुषेर्वा निपातनात् दीर्घः । पूषादित्यः । इन्हन्निति । पा० ६, ४, १२, । नियमात् दीर्घाभावः । पूषणौ । पूषणः । जयन्ति साधु पूषाणः शिष्यपङ्कजबोधकाः इति तु प्रमादः ॥ प्लिह गतौ । इकारस्य

दीर्घत्वम् । प्लीहा कुचिव्याधिः । प्लीहानः । अर्थवतो ह्नो नियमादत्र दीर्घत्वं भवत्येव ॥ क्लिदू आर्द्रभावे । गुणश्च । क्लेदा चन्द्रः । ष्णिह प्रीतौ । गुणः । स्नेहा व्याधिः । स्नेहानौ । स्नेहानः । मुर्वी मव बन्धने । उकारस्य दीर्घः । वकारस्य धकारः । मूर्धा शिरः । मूर्ध्वजेरूर्ध्वजेरिति यस्काद्वकारवानपि । तथा निपातनादागन्तुर्वकारः । भवार्थयति मूर्धन्यः ॥ मस्जेः सकारस्य चुत्वम् । शकारः । तस्य जस्त्वम् । जकारः । मज्जास्थिसारः ॥ माङ् । मानेऽर्यपूर्वः । अर्यमादित्यः । अर्यमणौ । अर्यमणः । बह्वर्यमाणि ॥ प्सा भक्षणे विश्वपूर्वः विश्वप्सा देवः ॥ जु इति सौत्रो धातुः परिपूर्वः । यणादेशः परिज्वा चन्द्रः ॥ टुओश्वि मातरिपूर्वः । सप्तम्या अलुक् । धातोरिकार लोपः । मातरिश्वा सदागतिः । कुक्रियश्च वाति प्रभातके मातरिश्वन्निति कादम्बरी ॥ महेः हकारस्य घकारोऽवुगागमश्च । मघवेन्द्रः । भट्टौ तु मघवत्शब्दोऽस्ति । हविर्जक्षिति निःशङ्को मखेषु मघवानसौ । १८, १९, । इति । सो च मघवान्मघवा चेति कान्तत्रसूत्रम् ॥ क्षपणकवृत्तावत्रेतिशब्द आद्यर्थे व्याख्यातः । हेलालीलेत्यमी हावाः । अम० १, १, ७, ३२, । इतिवत् । तेनान्येऽप्यत्र, यथादर्शनं द्रष्टव्याः ॥

॥ इति महोपाध्यायजाजलीत्यरनामधेय श्रीमदुज्ज्वलदत्तविरचितायामुणादिवृत्तौ प्रथमः पादः ॥ १ ॥

---

कृहृभ्यामेणुः ॥ १ ॥

डुकृञ् करणे। हृञ् हरणे॥ आभ्यामेणुः स्यात्। करेणुर्गजहस्तिन्योः। स्त्रियां करेणूरित्यपि दृश्यते॥ हरेणुर्गन्धद्रव्यं कलायश्च। यथा च। कलायस्तु सतीनकः। हरेणुखण्डिकौ चास्मिन्निति वैश्यवर्गेऽमरः॥

हनिकुषिनीरमिकाशिभ्यः क्थन्॥ २॥

हन हिंसागत्योः। कुष निष्कर्षे। णीञ् प्रापणे। रमु क्रीडायाम्। काशृ दीप्तौ॥ एभ्यो धातुभ्यः क्थन् भवति। हथो विषण्णः॥ कुष्ठं व्याधिसुगन्धयोः। द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः। पा० ५, २, १२८, इतीनिः। कुष्ठिनी। कुष्ठिनः॥ नीथो नयनम्। सुनीथो धर्मशीलः॥ रथः स्यन्दनः। रथः स्यात्स्यन्दने काये चरणे वेतसेऽपि च। थान्ते १,। इति विश्वः। दशरथस्यापत्यं दाशरथिः। क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तते। तेन प्रदीयतां दाशरथाय मैथिलीति सिध्यति॥ काष्ठं दारु समाख्यातं काष्ठा दिक्कालयोः स्मृता। काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः। स्यात् दिशि स्थानमात्रे च काष्ठमाख्यातमिन्धने। ठान्ते ८,। इति सः॥

अवे भृञः ॥ ३ ॥

अवशब्द उपपदे भृञः क्थन् भवति ॥ अवभृथः पच्च-भेदो यज्ञावसानञ्च ॥

उषिकुषिगार्तिभ्यस्थन् ॥ ४ ॥

उष दाहे । कुष निष्कर्षे । गै शब्दे । ऋ गतौ ॥ एभ्य-स्थन् स्यात् । ओष्ठो दन्तच्छदः । ओष्ठोत्वोर्वा पररूपत्वम् । पा० ६, १, ९४, ५, । बिम्बोष्ठी । बिम्बौष्ठी ॥ कोष्ठं कुक्षि-कुशूलयोः । कोष्ठं कुशूले चात्मीये कुक्षेरन्तर्गृहस्य च । ठान्ते ५, । इति विश्वः ॥ गाथा वाग्भेदवृत्तयोः ॥ अर्थोऽ-भिधेये शब्दानां धनकारणवस्तुषु । प्रयोजने निवृत्तौ च विषये च प्रयुज्यते । पर्यादित्वात् ठन् । अर्थिकः ॥ श्वि गतौ । बहुलकादतोऽपि थन् । शोथः श्वयथुरित्यमरटीकायाम् ॥

सर्तेर्णिच्च ॥ ५ ॥

सृ गतौ ॥ अतस्थन् णिद्भवति सार्थः समूहः ॥

जॄवृञ्भ्यामूथन् ॥ ६ ॥

जॄ वयोहानौ । वृञ् वरणे ॥ आभ्यामूथन् । जरूथं मांसम् ॥ वरूथो रथगुप्तौ ना ॥

पातृतुदिवचिरिचिसिचिभ्यस्थक् ॥ ७ ॥

पा पाने । तॄ प्लवनतरणयोः । तुद व्यथने । वच परिभाषणे । रिचिर् विरेचने । षिच क्षरणे ॥ एभ्यः षड्भ्यो धातुभ्यस्थक् स्यात् ॥ पीथो रविर्घृतं पीथम् । अहिर-मिहिरपीथाः कालकृत्यञ्जपाणिरिति वर्णविवेकः । पीथं

जलञ्च॥ तीर्थं गुर्वंवतारयोः। तीर्थं शास्त्राध्वरोपायक्षेत्रोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्। थान्ते ८,। इति विश्वः॥ तुत्थो वैश्वानरः। तुत्थोऽग्नावञ्जने तुत्था नीलीसूक्ष्मैलयोः। थान्ते ५,। इति विश्वः। उक्थं सामवेदः। तदधीते तद्वेद। पा० ४, २, ५९,। इति ठक्। औक्थिकः। रिक्थं दायादधनम्। सुवर्णमिति पारायणम्। ऋच स्तुतौ। अतोऽपि बाहुलकात्। हिरण्यं द्रविणं द्युम्नं रिक्थमृक्थं धनं वस्विति शब्दार्णवः। सिक्थं तु स्यान्मधूच्छिष्टम्। सिक्थं नील्यां मधूच्छिष्टे सिक्थ ओदनसम्भवे। थान्ते ४,। इति विश्वः।

अर्तेर्निरि॥ ८॥

ऋ गतौ॥ अतो निर्शब्द उपपदे थक्। निर्ऋथः साम॥

निशीथगोपीथावगथाः॥ ९॥

एते शब्दास्थक्प्रत्ययान्ता निपात्यन्ते। शीङ् स्वप्ने निपूर्वः। निशीथः स्यादर्धरात्रे निशीथो रात्रिमात्रके। थान्ते १४,। इति विश्वः। पा पाने गोपूर्वः। घुमास्थागात्यादिनेत्वम्। गोपीथं तीर्थमाख्यातम्। गाङोऽवपूर्वस्य ह्रस्वत्वम्। अवगथः प्रातः स्नातः॥

गश्चोदि॥ १०॥

गै शब्दे॥ अत उद्युपपदे थक्। उद्गीयत इत्युद्गीथः सामवेदध्वनिः प्रणवश्चेति सुभूतिचन्द्रः॥

समीरः ॥ ११ ॥

ईर् गतौ ॥ अतः सम्युपपदे घक्। समिथः वह्निः ॥

तिथपृष्ठगूथयूथप्रोथाः ॥ १२ ॥

तिथादयस्थक्प्रत्ययान्ता निपात्यन्ते ॥ तिज निशाने। जलोपः। तिथोऽनलकामयोः ॥ पृषु सेचने। पृष्ठं तु चरमं तनोरित्यमरः। पृष्ठशब्दः स्तोत्रवचनोऽपि। पृष्ठानां स्तोत्राणां समूहः पृष्ठादुपसङ्ख्यानम्। पा० ४, २, ४२, १,। इति यन्। पृष्ठ्यो यागविशेष इति ब्राह्मणादिसूत्रे रचितः। गुङ् अव्यक्ते शब्दे। यु मिश्रणे। अनयोर्दीर्घः। गूथं विष्ठा। यूथं समूहः॥ प्रुङ् गतौ। गुणः। प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते। वृत्तान्तरं मुदकान्तञ्च प्रियं प्रोथमनुव्रजेत्। प्रोथोऽध्वगेऽश्वघोणायां कटीस्त्रीगर्भयोः। थान्ते २,। इति विश्वः॥

स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपि वन्द्युन्दिश्वितिवृत्यजिनीपदि मदिमुदिखिदिछिदिभिदिमन्दि चन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधि शुभिभ्यो रक् ॥ १३ ॥

स्फायी वृद्धौ। तञ्चू सङ्कोचने। वञ्चु प्रलम्भने। शक्लृ शक्तौ। क्षिप प्रेरणे। क्षुदिर् सम्पेषणे। सृप्लृ गतौ। तृप प्रीणने। दृप हर्षमोचनयोः। वदि अभिवादनस्तुत्योः। उन्दी क्लेदने। श्विता वर्णे। वृतु वर्तने। अज गतिक्षेपणयोः। णीङ् प्रापणे। पद गतौ। मदी हर्षे। मुद हर्षे।

खिदि दैन्ये । छिदिर् द्वैधीकरणे । भिदिर् विदारणे । मदि स्तुतौ । चदि आह्लादने । दह भस्मीकरणे । दसु उपक्षये । दम्भु दम्भे । वस निवासे । वाशृ शब्दे । शीङ् स्वप्ने । हसे हसने । षिधु गत्याम् । शुभ दीप्तौ ॥ एभ्यो द्वात्रिंशद्भ्यो रक् स्यात् ॥ नेड्वशि कृतीतीट्प्रतिषेधः । वलि यलोपः । स्फारं प्रभूतम् । स्फारः स्याद्विकटे स्फारं फलका देश बुद्बुदे । रान्ते २२, । इति विश्वः ॥ न्यङ्क्वादित्वात्कुत्वम् । अनिदितामिति नलोपः । तक्रं मथितम् । तक्रमुदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् । अम० २, ९, ५३, ॥ वक्रमनृजुदुष्टयोः । वक्रः स्यात्कुटिले क्रूरे पुटभेदे शनैश्चरे । रान्ते ५४, । इति विश्वः ॥ शक्रः कुटजवज्रिणोः । शक्रो महेन्द्रे स्यात्कुटजार्जुनभूरुहोः । रान्ते ५३, । इति विश्वः ॥ क्षिप्रं शीघ्रम् ॥ क्षुद्रः स्याद्दरिद्रहीनयोः । क्षुद्रः स्यादधमे क्रूरे कृपणेऽल्पे च वाच्यवत् । क्षुद्रा वेश्यानटीकण्टकारिकासरघासु च । रान्ते ५८, । इति विश्वः ॥ क्षुपश्चन्द्रः ॥ छप्रः पुरोडाशः ॥ छप्री बलवान् ॥ वन्द्रः पूजकः ॥ नलोपः । उद्री जलचरः । सम्पूर्वात्समुद्रोऽब्धिः ॥ खिन्नं कुष्ठम् ॥ दस्रा ध्वान्तारिदानवाः । दस्रो रिपौ घने ध्वान्ते शैले चक्रे च दानवे । रान्ते ४०, । इति विश्वः ॥ अजेर्वीभावः । वीरः सुभटः । वीरस्तु सुभटे श्रेष्ठे वीरं शृङ्गाटकेऽपि च । वीरा स्यात् चीरकाकोलीतामलक्येलवालुषु । पतिपुत्रवतीरम्भागम्भारीमदिरासु च । रान्ते ९६, । इति विश्वः । नञि ।

अवीरा निःपतिसुता ॥ नीरं जलम् । निक्षमीर्तेः पृषोदरादित्वान्नीरमिति धातुप्रदीपटीका ॥ पद्रो ग्रामः संवेशश्च ॥ मद्रो हर्षो देशभेदश्च ॥ मुद्रा प्रत्ययकारिणी ॥ खिद्रो रोगो दरिद्रश्च ॥ छिद्रं विवरम् ॥ भिद्रं वज्रम् ॥ मन्द्रो गम्भीरध्वनिः ॥ चन्द्रः कर्पूरसोमयोः । चन्द्रः सुधांशुकर्पूरकम्पिल्लस्वर्णवारिषु । रान्ते ६३, । इति विश्वः । पचाद्यचि रेफशून्योऽपि चन्द्रोनिशापतौ । हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्द्रो हिमद्युतिरिति शब्दार्णवः ॥ दक्षो दावाग्निः ॥ दस्यति रोगान् क्षिपतीति दस्रः स्वर्वैद्यश्चोरश्च । नासत्यो दस्रश्च द्वावेनावश्विनीसुताविति स्मृतिः ॥ दभ्रः समुद्रः स्वल्पश्च । अदभ्रः प्रचुरम् । अदभ्रदर्भामधिशय्य स स्थलीम् । किरा० १, ३८, । इति भारविः ॥ वसेः सम्प्रसारणम् । शासिवसिघसीनाञ्च । पा० ८, ३, ६०, । इति षत्वं न भवति न रपरेत्यादिना । पा० ८, ३, ११०, । प्रतिषेधात् । उस्रो रश्मिर्देवश्च । उस्रा गौः ॥ वाश्रं पुरीषम् । वाश्रोऽपि दिवसे वाश्रं मन्दिरे च चतुष्पथे । रान्ते ७३, । इति विश्वः ॥ शीरोऽजगरः ॥ हस्रो-मूर्खः ॥ सिध्रः साधुर्वृक्षजातिश्च । कुसायां कन् । शिध्रकावणं कश्चिन्नाम । वनं पुरगेति । पा० ८, ४, ४, । णत्वम् ॥ शुभ्रं रुचिरं शुक्लञ्च पाण्डुरञ्च । शुक्लप्रदीप्तयोः शुभ्रमिति कोशान्तरम् ॥ भिश भष शब्दे । अतो बहुलवचनाद्रक् । भिश्रमिति देशना ॥ तथा पुडिधातोः पुण्ड्रो दैत्यभेदः तस्येदमित्यर्थे पौण्ड्रः पौण्ड्रवि-

वर्धनः॥ तथा सिनोतेः सिरा। नाडी तु धमनिः सिरेत्य-
मरः॥ मुसे रक्। मुस्रं नयनजलम्। मुस्रमश्रूणीति
प्रकारभेदः॥ अस्यते रक्। अस्रं रुधिरम्। तत्पिबती-
त्यस्रपो राक्षसः॥

चुक्रिरम्योरुच्चोपधायाः॥ १४॥

चक तृप्तौ। रमु क्रीडायाम्॥ आभ्यां रगुपधायाश्चो-
त्वम्। चुक्रमम्लद्रव्यम्। चुक्रस्त्वम्लेऽम्लवेतसे। चुक्री
चाङ्गेरिकायां स्यादृक्षाम्ले चुक्रमिष्यते। रान्ते ५१,। इति
विश्वः॥ रुम्रोऽरुणः शोभनश्च॥

वौ कसेः॥ १५॥

कस गतौ॥ अतो वावुपपदे रगुत्वं चोपधायाः। वि-
कुस्रश्चन्द्रमाः। वर्णविवेके पुनरुपधायां बहुलवचनादिकारा-
देशं कृत्वा विकस्र इति साधितम्। दर्शितञ्च। सिन्धूत्थ-
रात्रिमणिदर्शविधुमृगाङ्कविकस्रपर्वकरपारदविप्रराज इति
विक्रमादित्यः॥

अमितम्योर्दीर्घश्च॥ १६॥

अम गत्यादिषु। तमु काङ्क्षायाम्॥ आभ्यां रक् दीर्घ-
श्चोपधायाः। आम्रं फलम्। आम्रश्चूतो रसालोऽसौ। अम०
२, ४, २, १४,॥ ताम्रं शुल्वेऽरुणेऽन्यवत्। रान्ते ७०,।
इति विश्वः। अर्शआदित्वादच्चस्तरुस्ताम्रं शुल्वम्॥

निन्देर्नलोपश्च॥ १७॥

णिदि कुत्सायाम् ॥ अतो रक् नलोपश्च । निद्रा स्वप्नः ॥

अर्देर्दीर्घश्च ॥ १८ ॥

अर्द गतौ ॥ अतो रक् दीर्घश्च धातोः । आर्द्रा नक्षत्रम् । आर्द्रं सरसद्रव्यं त्रिषु । आर्द्रं त्वसिते त्रिष्विति विश्वः ॥

शुचेर्दश्च ॥ १९ ॥

शुच शोके ॥ अतो रक् दश्चान्तादेशो धातोर्दीर्घश्च । शूद्रो वृषलः । पुंयोगे शूद्री । शूद्रा तज्जातिरेव च ॥

दुरीणो लोपश्च ॥ २० ॥

इण् गतौ ॥ अतो दुरुपपदे रक् लोपश्च धातोः । रो रिलोपः । पा० ८, ३, १४, । इत्यादिकार्यम् । दूरं विप्रकृष्टम् । शेषे दूरादेत्येति वक्तव्यम् । पा० ४, २, १०४, ६, । दूरादागतो दूरेत्यः पथिकः । स्थूलदूरेति । पा० ६, ४, १५६, । दवीयान् । विदूरशब्दो नगरविशेषस्य पर्वतविशेषस्य बालवायस्य वाचकः । विदूरे प्रभवतीति विदूरात् ञ्यः । पा० ४, ३, ८४, । वैदूर्यो मणिः । बालवायजमिच्छन्ति वैदूर्यमणिमुत्तमा इति वृत्तिः ॥

कृतेश्छक्रू च ॥ २१ ॥

कृती छेदने ॥ अतो रक् छक्रू इत्येतावादेशौ स्तो यथाक्रममन्त्यसर्वयोः । कृच्छ्रं दुःखम् ॥ कृच्छ्रमाख्यातमाभीले पापसान्तपनादिनोः । रान्ते ६२, । इति विश्वः । पञ्चम्याः स्तोकादिभ्यः । पा० ६, ३, २, । इत्यलुक् । कृच्छ्रान्मुक्तः ।

सुखादित्वात्। पा० ३, १, १८,। कृच्छ्रायते। सुखादिभ्यश्च। पा० ५, २, १३१,। इतीनिः। कृच्छ्री॥ क्रूरः खलः। क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवत्। रान्ते २६,। इति विश्वः॥

## रोदेर्णिलुक्च॥ २२॥

रुदिर् अश्रुविमोचने॥ अस्मात् ण्यन्ताद्रक् णेश्च लुक्। लोपे हि प्रत्ययलोपलक्षणेन गुणः। रोदनाद्रुद्रः। यदुक्तम्। रोदनात्तव रुद्रेति नामधेयत्वमावहेत्यागमः। इन्द्रवरुणेति ङीषानुकौ। रुद्राणी॥ बहुलमन्यत्रापि संज्ञाच्छन्दसोः। अन्यत्रापि धात्वन्तरे प्रत्ययादौ च णेर्लुग्भवति। बहुलं संज्ञायां छन्दसि च विषये॥ संज्ञायां तावत्। धृञ् धारणे। अतो ण्यन्तात् पाशशूलचक्रवज्रशक्त्युदकदण्ड इत्येतेषूपपदेषु पचाद्यचि णिलुक्। पाशं धारयतीति पाशधरो वरुणः। शूलधरो रुद्रः। चक्रधरः कृष्णः। वज्रधरः इन्द्रः। शक्तिधरः कुमारः। उदकधरो मेघः दण्डधरो यमः॥ शुष शोषणे। मुच्लृ मोक्षणे। रुह जन्मनि। एभ्यः पर्ण उपपदे ण्यन्तेऽन्येभ्योऽपि दृश्यते। पा० ३, २, १७८,। इति क्विपि णिलुक्। पर्णानि शोषयतीति पर्णशुट्। पर्णमुट्। पर्णरुट्। झलां जशोऽन्ते। पा० ८, २, ३९,। चोः कुः। हो ढः। पा० ८, २, ३०, ३१,। इत्यादिकार्यम्। तथा च प्रयोगः। वान्ति पर्णशुषो वाता वान्ति पर्णमुचोऽपरे। ततः

पर्णरुहो वान्ति ततो देवः प्रवर्षति ॥ छन्दसि च । वृधु वृद्धौ । णिच् । णेलुंक् । वर्धन्तु त्वा सुष्टुतयः ॥

जोरीच ॥ २३ ॥

जु इति सौत्रो धातुः ॥ अतो रगीश्चान्तादेशः । जीरो ऽणुः । जीरः खड्गे वणिग्द्रव्ये । रान्ते २८, । इति विश्वः । संज्ञायां कनि जीरकं वणिग्द्रव्यम् ॥ ज्यइत्येके । तथा हि जीवे रदानुक् । पा० ६, १, ६६, १, । इत्यस्य प्रत्याख्यानार्थं नैतज्जीवे रूपं किन्तु रकि ज्यः सम्प्रसारणम् । पा० १, १, ४, । इति भाष्य उक्तम् ॥

सुसूधाञ्गृधिभ्यः क्रन् ॥ २४ ॥

षुञ् अभिषवे । षूङ् प्राणिगर्भविमोचने । डुधाञ् धारणे । गृधु अभिकाङ्क्षायाम् ॥ एभ्यः क्रन् । सुरो देवः । स्त्रियां टाप् । सुरा मदिरा ॥ सूरः सूर्यः । सौर सौरभास्पदमिति दन्त्यः । उत्तरसूत्रे तालव्यादिरपि सूर्ये । शूरश्चारभटे सूर्ये । रान्ते २६, । इति विश्वः ॥ ईत्वम् । धीरः पण्डितः । धीरा हि दुस्तरमपि व्यसनं तरन्ति ॥ गृध्रः पक्षी ॥

शुसिचिमिञ्नां दीर्घश्च ॥ २५ ॥

शु गताविति सौत्रः । षिञ् बन्धने । चिञ् चयने । डुमिञ् प्रक्षेपणे ॥ एभ्यः क्रन्नेषां दीर्घत्वञ्च । शूरो विक्रान्तः । पात्रेसमितादित्वात् पिण्डीशूरः । केचित्कुमुदाकरा इवासीदसूरभास इति सुबन्धुश्लेषात् दन्त्यादिरपि वीरवाचकः सूर इति सर्वस्व व्याख्यातम् । षु स्नु गतावित्ययं न

भूवादिकौ मूर्धन्योपदेशः पारम्पर्य्येण । तस्माद्भूवादेरवृत्तत्वात् ष्ठु इत्ययं धातुरूह्यत इति पुरुषोत्तमदेवः ॥ सीरो लाङ्गलम् । सीरपाणिर्हलायुधः ॥ चीरं वल्कलम् ॥ मीरः समुद्रः ॥

वाविन्धेः ॥ २६ ॥

ञिइन्धी दीप्तौ ॥ अतो वावुपपदे क्रन् । नलोपः । वीध्रं तु विमलार्थकमिति विशेष्यनिघ्नेऽमरः ॥

वृधिवपिभ्यां रन् ॥ २७ ॥

वृधु वृद्धौ । डुवप् ॥ आभ्यां रन् । वर्ध्रं चर्म । तस्य विकारः । पा० ४, ३, १३४, इति । अणन्तात् ङीप् । वार्ध्रीव नासास्येति वार्ध्रीणसः । अञ्नासिकायाः । पा० ५, ४, ११८, । इति नसादेशः पूर्वपदात्संज्ञायाम् । पा० ८, ४, ३, । इति णत्वम् । कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः । स वै वार्ध्रीणसः प्रोक्तः पितृणां पुष्टिवर्धन इत्यागमः ॥ पुन्नपुंसकयोर्वप्र इत्यमरः । वप्रः पितरि केदारे वप्रः प्राकाररोधसोरिति धरणिरन्तिदेवौ ॥

ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रामालाः ॥ २८ ॥

रनन्ता अनविंशतिरमी निपात्यन्ते ॥ ऋज गत्यादिषु । निपातनाद्गुणाभावः । ऋज्रो नायकः ॥ इदि । इन्द्रः शक्रः । इन्द्रः शचीपतावन्तरात्मन्यादित्ययोगयोः । रान्ते ६३, । इति विश्वः । तस्य स्त्रीन्द्राणी । रन्विधाविन्दीति न कृतं

वैचित्र्यार्थम्। इन्द्रवायू इन्द्वे॥ अङ्के नलोपः। अग्रं प्रधानमुपरिभागः॥ वज गतौ। वज्रोऽस्त्री हीरके पवौ। अम० ३, ४, १८६,। वज्रं हीरकदम्भोलिबालकामलकेषु च। वज्रा गुडूचिकायां स्यात्। रान्ते ७०,। इति सः॥ डुवप्। उपधाया इत्वम्। विप्रो ब्राह्मणः॥ कुबि आच्छादने। चुबि वक्त्रसंयोगे। अनयोर्नलोपः। कुब्रमरण्यम्॥ चुब्रं मुखम्॥ क्षुर विलेखने। रेफलोपः। अगुणः। क्षुरो लोमच्छेदकः। क्षुरः स्यात् छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे। रान्ते १२,। इति सः॥ खुर छेदने। गुणाभावोऽन्त्यलोपश्च। खुरः शफम्। कदाद्राघं दैर्घ्यं हरहषखरक्षुण्णनिर्दारिताभ्रमिति। खुर उपपदे प्रा पूरणे। अतः कः स्यात्। खुरप्रोऽस्त्रम्। दशाननक्षिप्तखुरप्रखण्डितः क्व चिन्नताङ्गो हिमदीधितिर्ययेति हरविलासः॥ भदि कल्याणे। नलोपः। भद्रं कल्याणम्॥ उच समवाये। चकारस्य गकारः। उग्रो महेश्वरः। उग्रः शूद्रासुते क्रूरे श्रीकण्ठे चोत्कटेऽन्यवत्। रान्ते ५५,। इति विश्वः॥ ञिभी भये। गौरादित्वात् ङीष्। भेरी दुन्दुभिः। पक्षे लत्वम्। भेलो जलतरणद्रव्यं हुडकायः कातरश्च। भेलः प्लवे भीलुके च निर्बुद्धिमुनिभेदयोः। लान्ते २३। इति विश्वः॥ शुचेश्चकारस्य ककारः। शुक्रो दैत्यगुरुः प्रोक्तः शुक्रो मासहुताशनौ। शुक्रं देहवतां वीजं शुक्रमक्षिरुजं विदुरिति शाश्वतः॥ शुक्लः शुभ्रः। शुक्लो योगान्तरे श्वेते शुक्लश्च रजते मतम्। लान्ते २९,। इति विश्वः॥ गुङ् अव्यक्ते

शब्दे । वृद्धिः । गौरोऽरुणे सिते पीते । अम० ३, ४, १९१, । गौरादित्वात् ङीष् । गौरी दुर्गा ॥ वन सम्भक्तौ । वन्नौ विभागौ । वर्णशब्दस्य कृपॄवृत्यादिना । ३, १०, । नप्रत्ययेन सिद्धत्वादनार्यः पाठः ॥ इण् गतौ । गुणाभावः । इरा मद्ये च वारिणि । इरावान् समुद्रः । तत्र भवः । ऐरावतः । ऐरावती नदी । उगम्यश्चेत्यादिना । पा० ३, २, ३७, । खशि ह्रस्वो निपातितः । इरम्मदः । इरम्मदोऽभ्राग्निरित्यन्ये ॥ मा माने । लत्वम् । माला स्रक् । मालं क्षेत्रे जने मालो माला पुष्पादिदामनि । लान्ते १५, । इति विश्वः । इष्टकेषीति । पा० ६, ३, ६५, । पूर्वपदस्य ह्रस्वत्वम् । मालभारिणी कन्या ॥ बाहुलकात् तिज निशाने । रन् । दीर्घत्वम् । जकारस्य वकारः । तीव्रं तीक्ष्णम् । चिञ् ॥

## सञ्चि कसेरुकन् ॥ २९ ॥

कस गतौ ॥ अतः सम्युपपद उकन् । सम्यक्कसन्ति पलायन्तेऽस्मादिति सङ्कसुको दुर्जन इत्युपाध्यायसर्वस्वम् । संशयमापन्नः । सङ्कसुकोऽस्थिर इत्यमरः । भीमादिरयम् ॥

## पचिनशोर्णुकन्कनुमौ च ॥ ३० ॥

पचेर्नशेर्णुकन् स्यात् । णकारो वृद्ध्यर्थः । अनयोश्च यथाक्रमं कादिम्नुमागमौ भवतः । पाकुकः सूपकारः स्यात् ॥ नंशुकोऽणुवाचकः ॥

भियः क्रुकन् ॥ ३१ ॥

ञिभी भये ॥ अतः क्रुकन् । भीरुकः कातरः ॥

क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥ ३२ ॥

शिल्पिन्यभिधेये संज्ञायां गम्यमानायां सोपपदादपि शब्दान्निरुपपदाच्च धातोः क्वुन् स्यात् ॥ शिल्पिनि तावत् । रञ्ज रागे । रजको वस्त्रशोधकः ॥ पूर्वस्य । इक्षुपूर्वात् कुट्ट छेदने । इक्षून् कुट्टयतीति । इक्षुकुट्टको गौडिकः ॥ संज्ञायाम् । तक्षू तनूकरणे । तक्षको वर्धकिः ॥ धूञ् कम्पने । धुवको गर्भमोचकः ॥ अभ्र वभ्रेति । अभ्रक मौषधम् ॥ चरेः । चरको वैद्यशास्त्रं प्रसिद्धं गन्ता च ॥ चष भक्षणे । चषकं पानपात्रम् ॥ शालपूर्वस्य भन्जो आमर्दने । नलोपाभावः । टाप् । शालभञ्जिका क्रीडा काष्ठपुत्रिका च । नित्यं क्रीडाजीविकयोः । पा० २, २, १७, । इत्यत्र तु संज्ञायामिति षत्वं कृत्वा न्यासे साधितम् । शीलभञ्जिकेति तत्प्रकारान्तरम् ॥ चायृ पूजादौ । पुष्पप्रचायिका । शुन गतौ ॥ शुनकः श्वा ॥ भष भर्त्सने । भषकोऽपि श्वेति क लिङ्गः ॥ आङ्पूर्वात् मलतेरामलकः । गौरादित्वात् ङीष् । आमलकी । सर्वदामलकी त्याज्या परित्यज्य दिनं रवेः ॥ कलां पातीति कलापकं चन्द्रकम् ॥ मल मल्ल धारणे । म-ल्लिका पुष्पजातिः । धम्मिल्लमल्लीस्रज इति प्रमादपाठः ॥ बहुलमन्यत्रापि ॥ उदकमिति प्रपञ्चार्थमिति प्राचीनवृत्तिः ॥ कनी दीप्तौ । कनकं सुवर्णम् ॥ कटे वर्षादौ । कटकं व-

लये स्तानौ राजधानीनितम्बयोः॥ लट बाल्ये॥ लटको दुर्जनः। इत्याद्यन्यदपि बोद्धव्यम्॥

रमे रस्य लो वा॥ ३३॥

रमेः क्वुन्। रेफस्य वा लत्वम्। रमको विलासी। लमकस्तीर्थशोधकः। नडादित्वात् लामकायनः॥

जहातेर्द्वे च॥ ३४॥

जहातेः क्वुन् धातोर्द्वित्वञ्च। आलोपोऽभ्यासकार्यञ्च। जहकस्त्यागिकालयोः॥

ध्मो धम च॥ ३५॥

ध्मा शब्दाग्निसंयोगयोः॥ अतः क्वुन् धमादेशश्च धातोः। धमकः कर्मकारः स्यात्॥

हनो वध च॥ ३६॥

हन्तेः क्वुन् वधादेशश्च धातोः। वधको हिंस्रः॥

बहुलमन्यत्रापि॥ ३७॥

अन्यत्रापि क्वुन् बहुलं स्यात्॥ कुह विस्मापने। कुहको दाम्भिकः॥ कृती छेदने। कृतकं मिथ्या॥ भिदिर्। भिदकः खड्गः॥ छिदिर्। छिदकं वज्रम्। रुचे रुचकं मातुलुङ्गकम्॥ लङ्गे लङ्गको वल्लभः॥ उज्क उत्सर्गे। उज्कको मेघयोगिनोः। इत्यादि॥

कृषेर्वृद्धिश्चोदीचाम्॥ ३८॥

कृष विलेखने॥ अतः क्वुनुदीचां मते धातोर्वृद्धिश्च। कार्षकः कृषीवलः। कृषकः स एव॥

उदकञ्च ॥ ३९ ॥

निपात्यते ॥ उन्दी क्लेदने । अतः क्वुन् । उदकं जलम् । दिगादित्वादुदकात्संज्ञायामिति यत् । उदक्या रजस्वला । उदक्या सर्ववर्णानां वर्ज्या रात्रिचतुष्टयम् । पेषंवासेति । पा० ६, ३, ५८, । उदकस्योदः । उदधिः । एकहलादौ । पा० ६, ३, ५९, । इति विकल्प उदककुम्भः । उदकुम्भः । श्रान्त्युदकुम्भहस्ताः । २, २०, । इति भट्टिः । उदशब्दोऽप्युदकपर्याय इति भाष्यटीका । उदकस्योदः संज्ञायामिति रचितः । सहस्यरात्रीरुदवासतत्परा । ५, २६, । इति कुमारः ॥

वृश्चिकृष्योः किकन् ॥ ४० ॥

ओव्रश्चू छेदने । कृष विलेखने ॥ आभ्यां किकन् । वृश्चिकः शूककीटे स्याद्राशिभेदेऽपि वृश्चिकः । कृषिकः फालः । स्त्री त्वकुशी कृषिकः फाल इति रत्नकोषः ॥

प्राङ्क्ति पणिकषः ॥ ४१ ॥

पण व्यवहारे । कष शिषेति दण्डकः ॥ आभ्यां किकन् प्राङ्युपपदे । प्रापणिकः पण्यविक्रयी ॥ प्राकषिको रामाया नर्तकः परदारोपजीवी च ॥

मुषेर्दीर्घश्च ॥ ४२ ॥

मुष स्तेये ॥ अतः किकन् । धातोर्दीर्घत्वम् मूषिक आखुः । अजादित्वान्मूषिका स्त्रियाम् । गिरिका बालमूषिकेत्यमरः ॥

श्यमेः सम्प्रसारणञ्च ॥ ४३ ॥

श्यमु शब्दे ॥ अतः क्किकन् धातोः सम्प्रसारणं दीर्घश्च । सीमिको वृक्षभेदः स्यात् ॥

क्रिय इकन् ॥ ४४ ॥

क्रीणातेरिकन् स्यात् । क्रयिकः क्रेता । विक्रयिको विक्रेता ॥

आङि पणिपनिपतिखनिभ्यः ॥ ४५ ॥

पण व्यवहारे स्तुतौ च । पन च । पत्लृ गतौ । खनु अवदारणे ॥ एभ्य आङ्गीकन् स्यात् । आपणिको वणिक् । अत्रैव शपूर्वं आङि शापणिकसिद्धौ प्राङि पणिति वैचित्र्यार्थम् । आपणेन व्यवहरतीत्यर्थे ठकि सिद्धे नित्स्वरार्थमिदम् ॥ आपनिक इन्द्रनीलः किरातश्च ॥ आपतिकः श्येनो दैवायत्तश्च ॥ आखनिको मूषिको वराहश्च ॥

श्यास्त्याहृञविभ्य इनच् ॥ ४६ ॥

श्यैङ् गतौ । ष्ट्यै स्त्यै शब्दसङ्घातयोः । हृञ् हरणे । अव रक्षणादौ ॥ एभ्य इनच् स्यात् । श्येनः पक्षी । श्येनस्त्रिषु सिते खग इति ॥ स्त्येनश्चोरः ॥ हरिणो मृगः पाण्डुरश्च । हरिणः स्यात्कुरङ्गेऽपि हरिणः पाण्डुरेऽन्यवत् । हरिणी हरितायाञ्च चारुवृत्तप्रभेदयोः । णान्ते ५०, । इति विश्वः ॥ अविनोऽध्वर्युः ॥

वृजेः किच्च ॥ ४७ ॥

वृजी वर्जने ॥ अस्मादिनच् किद्भवति । वृजिनं पाप-

वक्रयोः वृजिनं कलुषे पापे वृजिनं कुटिलेऽन्यवदिति । केशे तु वृजिनो मत इत्यमरः ॥

अजेरज च ॥ ४८ ॥

अजेरिनच् स्यादजादेशश्च वीभावबाधनार्थः ॥ अज गत्यादौ । अजिनं चर्म । अजिनं चर्म कृत्तिः स्त्रीत्यमरः ॥

बहुलमन्यत्रापि ॥ ४९ ॥

अन्यत्रान्यस्मादपि बहुलमिनच् किद्भवति ॥ कठ कृच्छ्रजीवने । कठिनं दृढम् । कठिनं निष्ठुरे स्याल्यां शर्करायां गुडस्य च । कठिना खटिकायान्तु कठिनीति प्रयुज्यते । नान्ते ४८, । इति विश्वः । कठिनी कक्खटो कटीत्यन्यः । नवजलधरश्यामाः पश्यन्दिशो भवन्तो विना कठिनहृदये जीवत्येव प्रिये स तव प्रियः ॥ कुडि दाहे । कुण्डिन ऋषिः । तस्यापत्यं कौण्डिन्यः ॥ वर्ह वल्ह प्राधान्ये । वर्हिणो मयूरः ॥ फलतेः फलिनः फली ॥ नल गहने । नलिनं पद्मम् । पुष्करादित्वान्नलिनी ॥ मसी परिमाणे । मसिनं सुपिष्टम् ॥ मल म धारणे । मलिनो मलीमसः ॥ बाहुलकात् द्रुहेरपि । द्रुहिणो ब्रह्मा ॥ तथा द्यतेर्दिनं दिवसमिति पुरुषोत्तमदेवः ॥

द्रुदक्षिभ्यामिनन् ॥ ५० ॥

गतौ । दक्ष हृद्धौ ॥ आभ्यामिनन् । द्रविणं द्रव्यम् । द्रविणं काञ्चने वित्ते द्रविणं च पराक्रमे ॥ दक्षिण ऋजुः । दक्षिणः सरलानामपरच्छन्दानुवर्त्तिषु । वाच्यवत् दक्षिणा-

वाचीयज्ञदानप्रतिष्ठयोः । णान्ते ४५, । इति विश्वः । दक्षि णादिकं दानस्य ॥

अर्तेः किदिच्च ॥ ५१ ॥

ऋ गतौ ॥ अस्मादिनन् कित्स्यादिकारश्च धातोः । रपरत्वम् । इरिणं शून्यमूषरमित्यमरः ॥

वेपितुह्योर्ह्रस्वश्च ॥ ५२ ॥

टुवेपृ कपि चलने । तुहिर् अर्दने ॥ आभ्यामिनन् । ह्रस्वो ह्रस्वत्वञ्च धातोः । विपिनं गहनम् ॥ तुहिनं हिमम् । तुहिनमित्यत्र गुणे कृते ह्रस्वः ॥

तलिपुलिभ्याञ्च ॥ ५३ ॥

तल प्रतिष्ठायाम् । पुल महत्त्वे ॥ आभ्यामिनन् । तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु । नान्ते ४८, । इति विश्वः ॥ पुलिनं तोयसन्निधाविति नान्तेऽमरः ॥

गर्वेरत उच्च ॥ ५४ ॥

गर्व मोचने ॥ अस्मादिनन् । अकारस्योत् । गौरादित्वात् ङीष् । गुर्विणी गर्भिणी ॥

रुहेश्च ॥ ५५ ॥

रुह जन्मनि ॥ अत इनन् । रोहिणः । प्रज्ञादित्वादणि रौहिणश्चन्दनतरुः अश्वादित्वात्फञ् । रौहिणायनः । स्त्रियां जातेः । पा० ४, १, ६३, । इति ङीष् । रोहिणी गौः । गौरादित्वात् रोहिणी नक्षत्रे ॥

महेरिनण् च ॥ ५६ ॥

मह पूजायाम् ॥ अस्मादिनण् स्यात् । चकारादिन्नपि । माहिनं महिनं राज्यम् ॥

क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणञ्च ॥५७॥

वच परिभाषणे । प्रच्छ ज्ञीप्सायाम् । श्रिञ् सेवायाम् । स्रु गतौ । द्रु गतौ । प्रुङ् गतौ । जु इति सौत्रो धातुः ॥ एभ्यः क्विप् । एषां दीर्घोऽसम्प्रसारणञ्च । वचिप्रच्छ्योः पदान्तकार्यं च्वोः कुरित्यादिकम् । वाक् सरस्वती । टाप् । भागुरिमतेनाजादिपाठात् वाचा वाक् गीः सरस्वतीति चन्द्रः । वाचो ग्मिनिः । पा० ५, २, १२४, । वाग्मी ॥ शब्दं पृच्छतीति शब्दप्राट् शिष्यः । च्छ्वोः शूडनुनासिके च । पा० ६, ४, १९, । इति शत्वम् । शब्दप्राशौ । शब्दप्राशः ॥ श्रीर्लक्ष्मीः । श्रीर्वेशरचनाशोभाभारतीसरलद्रवे । लक्ष्म्यां त्रिवर्गसम्पत्तौ वेषोपकरणे मता । रान्ते २, । इति विश्वः । कृदिकारात् । पा० ४, १, ४५, । इति ङीष् । श्रीयमित्यपि भवतीति दुर्वृत्ते रचितः । स्रवत्यतो घृतादिकमिति स्रूर्यज्ञोपकरणम् । द्रूर्हिरण्यम् ॥ कटेन प्रवर्तत इति कटप्रूः कामरूपी कीटश्च ॥ जूः शब्दोऽम्बरवृषभयोर्जूः पिशाची स्त्रियां मतेति रूपमञ्जरी । जूराकाशे सरस्वत्यां पिशाच्यां जवनेऽपि च । विश्व० जान्ते १, ॥ इह क्विबिति योगविभागाच्छेषः । प्रवर्षन्त्यस्यां घना इत्यधिकरणे प्रावृट् । अजादिपाठादेकीयमतेन टाप् । प्रावृषा तु जलाप्लव इति कोशः ॥ द्वारयते । द्वाः । द्वारौ । द्वारः ॥ टुओश्वि । उदकेन श्वयति ।

उदश्विन्मथितम् ॥ ऋच स्तुतौ ऋचन्ति स्तुवन्त्यनयेत्यृग्वेदः ॥

आप्नोतेर्ह्रस्वश्च ॥ ५८ ॥

आप्लृ व्याप्तौ ॥ अतः क्विप् धातोर्ह्रस्वत्वञ्च। आप इति जसि दीर्घः। आपः स्त्री भूम्नि। अम० १, २, ३, ३,। आपः। अद्भिः। अद्भ्यः। अपाम्। अप्सु। ऋक्पूरित्यादिना च समासान्तः। पा० ५, ४, ७४,। बह्वपानि तडागानि सारसाः सुपासत इति विनीतकीर्त्तिः। समासान्त-नित्यत्वे च बह्वाम्पि तडागानीति वृत्तिः। अद्भ्य उत्तारक उदपः प्लवः। ऊदनोर्देशे। पा० ६, ३, ९८,। इति दीर्घनिर्देशादन्यत्रापि भवतीतीको ह्रस्वोऽङ्यो गालवस्येत्यत्र भागवृत्तिः। आपस्शब्दोऽप्यस्ति। तस्यायं प्रयोगः। आपोभिमार्जनं कृत्वेति। तथा च कोशः। कमलं सलिलं भुवनमुदकं पावनं नीरं वनवारी जीवनांबूपः। सर्वमापोमयं जगदिति चण्डी॥

परौ व्रजेः षश्च पदान्ते ॥ ५९ ॥

व्रज गतौ ॥ अस्मात्परावुपपदे क्विप् दीर्घत्वञ्च। पदान्ते षत्वम्। परिव्राट् भिक्षुः। परिव्राजौ। परिव्राजः॥

ह्रुवः श्लुवच्च ॥ ६० ॥

जुहोतेः क्विप्। दीर्घत्वं श्ल्वादिवच्च कार्यम्। ततो द्विर्वचनादिकम्। जुहूः स्त्रियां स्रुग्भेद इत्यमरः॥

स्रुवः कः ॥ ६१ ॥

स्रु गतौ॥ अस्मात्कप्रत्ययः स्यात्। स्रुवो यज्ञोचित-

द्रव्यम् ॥ बाहुलकात् ध्रु स्थैर्ये । अतोऽपि कः । ध्रुव औत्ता नपादिः स्यात् । ध्रुवमपायेऽपादानम पा० १, ४, २४, ॥

चिक्च ॥ ६२ ॥

स्रवतेरेव चिक् च स्यात् । इकार उच्चरणार्थः । ककार कित्कार्यार्थः । स्रुक्लम् । स्रुक् । स्रुचौ । स्रुचः । यज्ञोचितद्रव्यम् ॥

तनोतेरनश्च वः ॥ ६३ ॥

तनोतेश्चिगनस्य वकारादेश । त्वक् । त्वचौ । त्वचः । चर्मवल्कलयोः । चान्ते १३, । इति विश्वः । त्वचशब्दोऽकारान्तोऽप्यस्ति । त्वचवेष्टितमस्थिपञ्जरं यदि काममं समुपैषितमिति प्रयोगः । त्वचं गृह्णाति त्वचयति । सत्यापपाशेति । पा० ३, १, २५, । णिच् । स्त्रियां त्वक् स्यात्त्वचं चोचमिति कोशः ॥

ग्लानुदिभ्याण्डौः ॥ ६४ ॥

ग्लै हर्षक्षये । णुद प्रेरणे ॥ आभ्याण्डौः स्यात् । ग्लौश्चन्द्रः ॥ नौर्जलतरणद्रव्यम् । नावा तरति । नाविकः कर्णधारः स्यात् ॥

चिरव्ययम् ॥ ६५ ॥

डोप्रत्ययश्च्व्यन्तोऽव्ययसंज्ञकः स्यात् । शब्ने जन्तः । पा० १, १, ३८, । इति सिद्धे नियमार्थं डोप्रत्ययान्तश्च्व्यन्त एवा यन्न केवलः । ऊर्यादिच्विडाचश्च । पा० १, ४, ६१, । इति निपातनत्वेनाव्ययत्वे सिद्धे सूत्रमिदमारभ्यते नियमार्थम् ।

यद्युणादिषु व्युत्पन्नस्याव्ययत्वं भवति तदा च्व्यन्तस्यैवेतर-स्त्रीनौरैगोद्यो:शब्दानां केवलानां क्रमेजन्त इति नाव्य-यत्वं स्त्रीर्नौरित्यादिसमयानिकषामुहुरेवतुमित्यादीनान्तु चादिस्वरादिपाठसामर्थ्यादव्ययत्वम् । अस्त्रीस्त्रीः स-म्पद्यते । अभूतेत्यादिना । पा० ५, ४, ५०, । च्विप्रत्ययः । स्त्रीकरोति । स्त्रीभवति । स्त्रीस्यात् । एवं नौभवतीत्यादि । अव्ययत्वात्सुप्लुक् । केवलस्य तु न भवति स्त्रीर्नौरिति ॥

रातेर्डैः ॥ ६६ ॥

रा दाने ॥ अस्मात् डैः स्यात् । स च च्व्यन्त एवाव्य-यम् । रायो हलि । पा० ७, २, ८५, । राः । रायः । रायौ । रायः । राभ्याम् । राभिः । रायमति क्रान्तानां ब्रा-ह्मणकुलानामतिराणामिति । नामि । पा० ६, ४, ३, । इति दीर्घात्परत्वादात्वम् । च्विप्रत्यये रैकरोतीति । रैशब्दः कनके धन इति धरणिः ॥

गमेर्डोः ॥ ६७ ॥

गच्छतेर्डोः स्यात् स च च्व्यन्त एवाव्ययम् । गोतो णित् । पा० ७, १, ९०, । गौः । गावौ । गावः । भूम्नि चेति कोशः । स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः । अर्जुनी-नेत्रदिग्बाणभूवाग्वारिषु गोमता । गान्ते १, । इति विश्वः । धवला गावश्चरन्ति । स्वर्गे रश्मौ च वज्रे च बलीवर्दे च गौः पुमान् । स्त्री वाणरोहिणीनेत्रदिग्वाग्भूप्स्वसु भूम्नि च । गौरिवायो गमनमस्येति गवयः पशुभेदः स्यात् । गौरादि-

त्वाद्गवयी । द्यौ च गौश्चरीतोत्यादि ॥ बाहुलकात् द्युतेरपि डोः । द्योतन्ते देवा अस्यामिति द्यौः स्त्री स्वर्गान्तरिक्षयोः । गोशब्दवद्रूपमस्य ॥

भ्रमेश्च डूः ॥ ६८ ॥

भ्रमतेश्च डूः स्यात् । भ्रूर्नेत्रयोरुपरि रेखा । शोभने भ्रुवौ यस्याः सा सुभ्रूः । सम्बोधनेऽम्बार्थनद्योर्ह्रस्वः । पा० ७, ३, १०७, । नेयङुवङ्स्थानावस्त्री इत्यनेन वाऽमि । पा० १, ४, ४, ५, । इत्यतो वाग्रहणस्य सिंहावलोकितन्यायेनानुवृत्तस्य व्यवस्थितविभाषात्वान्न नदीसंज्ञाभावः । हा पितः ! क्वासि हे सुभ्रु ! बह्वेवं विललाप सः । ६, ११, । इति भट्टिः । विमानना सुभ्रु ! कुतः पितुर्गृहे । कु० सं० ५, ४३, । इति कालिदासः । भ्रुवोर्भङ्गो भ्रूभङ्गो भ्रुभङ्गो भ्रूभङ्गश्चेति रूपत्रयम् । भ्रुकुंसादीनामकारो वा । पा० ६,३,६१, ३, । इत्यकारह्रस्वौ । पक्षे दीर्घ एवावतिष्ठते । एतत्सर्वमिको ह्रस्व इत्यत्र भागवृत्तिः । चकाराद्गमेरपि डूः । अग्रे गच्छतीत्यग्रेगूः सेवकः ।

दमेर्डोसिः ॥ ६९ ॥

दमु उपशमे । अतो डोसिः । डित्वाट्टिलोपः । दोर्बाहुः । दोषौ । दोषः । दोर्दण्डेन शराः शरैररिशिरश्छेदनापि भूमण्डलमिति सुबन्धुः । दोर्भ्यां चरति दौष्कः । दोष उपसङ्ख्यानमिति ठक् । इणः षः । पा० ८, ३, ३९, । इति षत्वम् ।

पणेरिज्यादेश्च वः ॥ ७० ॥

पणेरिजिः स्यादादेश्च वकारादेशः । पदान्तकार्य्यम् । वणिक् पण्यविक्रयी । वणिजौ । वणिजः । मरकत पतितोऽसि पामरे वणिजि । स्वार्थेऽणि नैगमो वाणिजो वणिगित्यमरः ॥

वशः कित् ॥ ७१ ॥

वश कान्तौ ॥ अत इजिः कित्स्यात् । ग्रह्यादिसूत्रेण । पा० ६, १, १६, । सम्प्रसारणम् । उशिगग्नौ घृतेऽपि च ॥

भृञ उच्च ॥ ७२ ॥

भृञ् भरणे ॥ अस्मादिजिः कित्स्यात् । धातोरुकारान्तादेशः । भुरिक् स्याद्वसुन्धरा । भुरिजौ । भुरिजः ॥

जसिसहोरुरिन् ॥ ७३ ॥

जसु मोचने । षह मर्षणे ॥ आभ्यामुरिन् । जसुरिर्वज्रम् ॥ सहुरिरादित्यः पृथिवी च ॥

सुयुरुवृञो युच् ॥ ७४ ॥

षुञ् अभिषवे । यु मिश्रणे । रु शब्दे । वृञ् वरणे ॥ एभ्यो युच् । सवनश्चन्द्रमाः ॥ यवनो म्लेच्छविशेषः ॥ रवणः कोकिलः । रवणः शब्दनो नान्दीवादी नान्दीकरः समावित्यमरः ॥ वरणो वरुणो वृक्षभेदश्च । टाप् । वरणा नदी ॥

अशे रश च ॥ ७५ ॥

अशू व्याप्तौ ॥ अस्माद्युच् रशादेशश्च धातोः । रशना

काञ्ची । जिह्वावाची तु रसनाशब्दो दन्त्यसकारवानेव । स्वादयतीति नन्द्यादित्वात् ल्युः । पा० ३, १, १३५, । इति कलिङ्गः । रसना काञ्चिजिह्वयोरिति तु धरणिः । रस आस्वादने चौरादिकः । ततो नन्द्यादित्वात् ल्युरिति धातुप्रदीपटीका कलिङ्गश्च । अजयकोशे काञ्च्यामपि दन्त्यवान् । रसनं निस्वने स्वादे रसना काञ्चिजिह्वयोः । रादि० १२ । धरणिश्चैवम् । एवं च रसनाशब्दोऽत्र कैश्चित् दन्त्यवानिष्यते । व्यथितसिन्धुमनीरशनैः शनैरमरलोकवधूजघनैः । किरा० ३, ११, । इति भारविः ॥

उन्देर्नलोपश्च ॥ ७६ ॥

उन्दी क्लेदने ॥ अतो युच् नलोपश्च । ओदनोऽस्त्री भक्तम् । अन्नेन व्यञ्जनम् । दध्नोपसिक्त ओदनो दध्योदनः । पा० २, १, ३४, ॥

गमेर्गश्च ॥ ७७ ॥

गमेर्युच् स्यात् गकारश्चान्तादेशः । गगनमाकाशम् ॥

बहुलमन्यत्रापि ॥ ७८ ॥

बहुलं युच् स्यात् ॥ द्युत दीप्तौ । द्योतनो दीपकः ॥ स्यन्दनो रथः । स्यन्दनन्तु स्रुतौ नीरे नान्ते ७४, । इति विश्वः ॥ नयनं लोचनम् ॥ चन्दनोऽस्त्री मलयजे ॥ रुच दीप्तौ । रोचना ॥ गोपूर्वात् गोरोचना गोपित्तसम्भवं द्रव्यम् । गोरोचना चन्दनीयद्रव्यम् ॥ अश्यतेरसनः पीतसालः । प्रियविमानितमानवतीरुषां निरसनैः रसनैरवृथार्थता ।

६, ४७, । इति माघः । वृन्दावने तु विकसितकन्दलदशनै-र्घोषति दरीमुखैश्च कन्दलदशनैरिति तालव्यवानपि । स चा-श्नोतेः ॥ अत सातत्यगमने राजपूर्वः । राजातनः चीरि कायां पियाले किंशुकेऽपि च । नान्ते १५२, । इति विश्वः ॥ श्रवणा नक्षत्रम् । पुंस्यपि । शोभां समुन्नतिपूजां प्राप्य श्रव-णयोगतः । तद्विच्छेदाद्गुणैर्हीनः शक्रोऽपि निपतत्यधः । श्रा-वणी पौर्णमासी । एवमादयोऽन्येऽपि द्रष्टव्याः ॥

रञ्जेः क्युन् ॥ ७९ ॥

रञ्जतेः क्युन् ॥ रजनं कुसुम्भम् । गौरादित्वाद्रजनी हरिद्रा रात्रिश्च । ल्युटि प्रत्यये रञ्जनम् । राजा प्रकृति-रञ्जनात् । ४, १२, । इति रघुः ॥ बाहुलकात् कृपेरपि क्युन्प्रत्ययो लत्वाभावश्च । कृपे रो लः । पा० ८, २, १८, । इत्यत्र न्यासः । कृपणः । कृपणेन समो दाता न कश्चिद्भुवि विद्यते । अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छतीति व्यासः ।

भूसूधूभ्रस्जिभ्यश्छन्दसि ॥ ८० ॥

एभ्यश्चतुर्भ्यश्छन्दसि क्युन् भवति ॥ भुवनं लोकः । बहुल-वचनाद्भाषायामपि प्रयुज्यते ॥ शशिना च निशा निशया च शशी शशिना निशया च यथा गगनम् । भवता च सभा-सभाया च भवान् भवता सभया च तथा भुवनमिति सर्वस्वम् । विष्टपं भुवनं जगदित्यमरः । पात्रादित्वात् । पा० २, ४, १७, ४, । त्रिभुवनं त्रिजगती ॥ सुवन आ-

दित्वः ॥ धुवनो वह्निः । निधुवनं सुरतक्रीड़ा ॥ सम्प्रसारणादिकार्यम् । भृज्जनमम्बरीषम् ॥

कृपृवृजिमन्दिनिधाञः क्युः ॥ ८१ ॥

कृ विक्षेपे । पृ पालनादौ । वृजी वर्जने । मदि स्तुत्यादौ । डुधाञ् निपूर्वः ॥ एभ्यः क्युः । इत्त्वरपरत्वे । किरणो रश्मिः ॥ उत्वं रपरत्वञ्च । पुरणः समुद्रः ॥ वृजनमन्तरिक्षम् ॥ मन्दनं स्तोत्रम् ॥ आतो लोपः । निधनं मरणम् । बाहुलकात्केवलादपि क्युः । धनं द्रव्यमिति ॥

धृषेर्धिष च संज्ञायाम् ॥ ८२ ॥

ञिधृषा प्रागल्भ्ये ॥ अतः क्युर्धिषादेशश्च धातोः । धिषणो गुरुः । धिषणस्त्रिदशाचार्ये धिषणा धीश्च संमता । णान्ते ४७, । इति विश्वः । धिषणा मनीषा ॥ संज्ञाधिकारे पुनः संज्ञाग्रहणं प्रायेणोणादीनां यौगिकत्वसूचनार्थम् ॥

हन्तेर्घुरच्च ॥ ८३ ॥

घुरणः शब्दः ॥

वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ॥ ८४ ॥

पृषदादयोऽतिप्रत्ययान्ता निपात्यन्ते शतृवच्चैषां कार्यं भवति ॥ पृषु सेचने । गुणाभावः । नुमागमः । नपुंसकत्वात्सुलोपः । पृषन्मृगे च बिन्दौ च । पृषती । पृषन्ति । पृषन्ति बिन्दुपृषता इत्यमरः । स्त्रियां ङीप् । पृषती । स्थूलपृषतीमनड्वाहीमालभेतेतीन्दुमित्रः ॥ बृह वृद्धौ । बृह-

द्विपुलम् । त्रिलिङ्गः । बृहती क्षुद्रवार्ताकी छन्दोभेदो महत्यपीत्यनेकार्थेऽमरः ॥ मह पूजायाम् । नुम् । सान्तमहतः संयोगस्य । पा० ६, ४, १०, । इति दीर्घः । महान् । पृथ्वादित्वान्महिमा । स्त्रियां ङीप् । महती । महती नारदवीणापि सा भवेत्सप्ततन्त्रिका । अवेक्षमाणं महतीं मुहुर्मुहुः । १, १०, । इति माघः ॥ गमेर्जगादेशः । जगत्स्याद्विष्टपे क्लीवं वायौ ना जङ्गमे त्रिष्विति रुद्रकोशः । जगदाख्या स्मृता वाते विष्टपे जङ्गमेऽपि च । जगती भुवने ख्याताच्छन्दोभेदे जनेऽपि च तान्ते १४०, । इति विश्वः । अमरश्चानेकार्थवर्गे । जगती त्रिजगती ॥ वर्तमानग्रहणं भूतेऽपि दृश्यन्त इति शङ्कानिरासार्थं प्रपञ्चार्थमित्युणादयो बहुलमित्यत्र न्यासः ॥

संश्चत्तृपद्वेहत् ॥ ८५ ॥

एतेऽतिप्रत्ययान्ता निपात्यन्ते ॥ सञ्चिनोतेः सुट् । इकारलोपः । संयत्कुहकः । भृशादित्वात् क्यङ् । संसायते । सम्पूर्वात् श्वयतेः संश्चदिति सुभूतिचन्द्रः ॥ तृप प्रीणने । तृपत् छत्त्रं ॥ विहन्ति गर्भमिति विपूर्वाद्धन्तेष्टिलोपे वेरेकारादेशश्च । वेहद्गर्भोपघातिनी गौरिति न्यासः । वेहती । वेहतः । पोटायुवतीति । पा० २, १, ६५, । समासः । गोवेहत् ॥ पृथग्योगकरणं शत्रुवत्कार्यनिवृत्त्यर्थम् ॥

छन्दस्यसानच् शृजृभ्याम् ॥ ८६ ॥

शृ गतौ । जृ वयोहानौ ॥ आभ्यां छन्दसि विषयेऽसा-

  

नच् । अवसानः पन्थाः ॥ जरसानः पुरुषः ॥ बाहुलकात् दृ विदारणे । दरसानो घोत्वम् ॥ तॄ प्लवनादौ । तरसानो नौका ॥ वृञ् वरणे । वरसानो दारिका इत्यन्ये ॥

ऋञ्जिवृधिमन्दिसहिभ्यः कित् ॥ ८७ ॥

ऋजि भर्जने । वृधु वृद्धौ । मदि स्तुत्यादौ । षह मर्षणे ॥ एभ्योऽसानच् किद्भवति । ऋञ्जसानो मेघः । इदित्त्वादत्र नलोपाभावः ॥ वृधसानः पुरुषः ॥ मन्दसानोऽग्निर्जीवश्च ॥ सहसानो यज्ञो मयूरश्च ॥

अर्तेर्गुणः शुट् च ॥ ८८ ॥

ऋ गतौ ॥ अस्मादसानच् । धातोर्गुणः प्रत्ययस्य शुडागमश्च । अर्शसानोऽग्निः ॥

सम्यानच् स्तुवः ॥ ८९ ॥

ष्टुञ् स्तुतौ ॥ अतः सम्युपपद आनच् स्यात् । संस्तवानो भवेद्वाग्मी ॥

युधिबुधिदृशः किच्च ॥ ९० ॥

युध सम्प्रहारे । बुध बोधने । दृशिर् प्रेक्षणे ॥ एभ्य आनच् किद्भवति । युधानो रिपुः ॥ बुधान आचार्यः ॥ दृशानो लोकपालकः ॥ बाहुलकात् कपेरप्यानच् । कपे रो ल इत्यत्र रचितः । कपाणः खड्गः । दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य । कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥ रिपुरुधिरधुनीषु स्नातकस्तत्कृपाणः ॥ पर्णेर्णिच । पाषाणः ॥

मुचियुधिभ्यां सन्चच्च ॥ ९१ ॥

मुमुचानः ॥ युयुधानः ॥

हुर्छेः सनो लुक् छलोपश्च ॥ ९२ ॥

हुर्छतेः सनन्तादानच्। सनो लुक् छकारस्य च लोपः। जुहुराणश्चन्द्रमाः ॥

श्वितेर्दश्च ॥ ९३ ॥

श्वेततेः सनन्तादानच् स्यात्। सनो लुक् तकारस्य च दकारः। किदित्यनुवृत्तेर्न गुणः। शिश्विदानः पापकर्मेति विशिष्यनिघ्नेऽमरः ॥

तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ॥ ९४ ॥

शंसिप्रभृतिभ्यः क्षदिप्रभृतिभ्यश्च यथाक्रमं तृन्तृचौ स्याताम्। तौ चानिटौ संज्ञायां विषये ॥ शंसु स्तुतौ। शंस्ता स्तोता। अप्तृन्नादिसूत्रे नप्तृप्रभृतिपाठात्तृन्तृचोरौणादिकयोरग्रहणम्। तेनात्र न दीर्घः। शंस्तरौ। शंस्तरः ॥ शास्ति विनयति सत्त्वान्। शास्ता बुद्धः। शास्तरौ ॥ प्रशास्ता राजा। प्रशास्तारौ। प्रशास्तारः ॥ क्षद सम्वृताविति सौत्रो धातुः। क्षत्ता क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रज इति नाममाला ॥ क्षुदिर्। चोत्ता मुसलः ॥ णीञ् उत्पूर्वः। उन्नेता ऋत्विक्। एवमन्येऽपि ॥

बहुलमन्यत्रापि ॥ ९५ ॥

अन्यत्रापि बहुलं तृन्तृचौ स्याताम् ॥ मन ज्ञाने। मन्ता विद्वान् ॥ हन। हन्ता चौरः। दिश। उपदेष्टा गुरुः ॥

धाञ् । धाता प्रजापतिः । प्रपञ्चार्थमिदं पूर्वेणैव सिद्धत्वात् ॥

नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ॥९६॥

नप्त्रादयो दश तृन्तृजन्ता निपात्यन्ते ॥ पत्लृ गतौ । न पतन्त्यनेनेति नञः प्रकृतिभावः । अच्छब्दलोपः । नप्ता पौत्रो दौहित्रश्च । नप्तुः पुत्रः प्रनप्ता स्यात् । स्त्रियामृन्नेभ्यो ङीप् । नप्त्री पौत्री सुतात्मजा । स्त्रियामपि स्वस्रादिपाठात् नप्तेति क्वचित् ॥ नयतेः षुक् । नेष्टा ऋत्विक् ॥ त्विषि दीप्तौ इतोऽत्वम् । त्वष्टा सूर्यः हु दाने । होता यजमानः ॥ पुनातेः पोता विष्णुः ॥ भ्राजतेर्जकारलोपः । भ्राता सहजः । सुभ्राता । युवादित्वात् । सौभ्रात्रमेषां हि कुलानुसारि । १६, १, । इति रघुः ॥ जायां माति मिनोति मार्जयति वा । जामाता दुहितुः पतिः ॥ मान पूजायाम् । नलोपः । माता जननी । स्वस्रादित्वान्न टाप् । अभ्यर्हितत्वात् । पा० २, २, ३४, ३, । मातापितरौ । मातुर्मातरश्च पितरौत्यात्वम् । सहस्रेण पितुर्माता गौरवेणातिरिच्यते । गर्भधारणपोषाभ्यां तेन माता गरीयसीति स्मृतिः ॥ पा रक्षणे । आकारस्येत्वम् । पातीति पिता । तातस्तु जनकः पिता । अम० २, ६, १, २८, । अर्थदाता भयत्राता यस्य कन्यां प्रयच्छति । जनयिता चोपनेता पञ्चैते पितरः स्मृताः ॥ दुहेरिडागमः । गुणाभावः । दुहिता सुता । विदा दित्वादञि दौहित्रः ॥

सुञ्यसेर्ऋन् ॥ ९७ ॥

असु रक्षणे ॥ अतः सुञ्युपपदे ऋन् यणादेशश्च । स्वसा भगिनी । स्वसुश्छः । पा० ४, १, १४३, । स्वस्रीयो भागिनेयः ।

यतेर्वृद्धिश्च ॥ ९८ ॥

यती प्रयत्ने ॥ अस्मादृन् धातोर्वृद्धिश्च याता । भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परमित्यमरः । यतेः पूर्वेणैव सिद्धे वचनं वैचित्र्यार्थम् ॥

नञि च नन्देः ॥ ९९ ॥

नन्दतेर्नञ्युपपदे ऋन् धातोर्वृद्धिश्च । न नन्दति न तुष्यति । ननान्दा । स्वस्रादिनिपातनान्नञो नलोपाभावः । केचिदिह वृद्धिं नानुवर्तयन्तीति चन्द्रः । तेषां वृद्ध्यभावे ननन्दा । तथा च शब्दार्णवः । ननान्दा च स्वसा पत्युर्ननन्दा नन्दिनी च सा । शसि ननान्दॄः ॥

दिवेर्ऋः ॥ १०० ॥

दीव्यतेर्ऋः स्यात् । अनङादिकार्यम् । देवा देवरको मतः ॥

नयतेर्डिच्च ॥ १०१ ॥

नयतेर्ऋप्रत्ययो भवति डित् । डित्त्वाट्टिलोपः । ना । नरौ । नरः । शार्ङ्गरवादिषु नृनरयोर्वृद्धिश्चेति पाठात् नारी सीमन्तिनी वधूः । अम० २, ६, १, २, ॥

सव्ये स्थश्छन्दसि ॥ १०२ ॥

तिष्ठतेः सव्य उपपदे छन्दस्यृः स्यात्स च डित्। तत्पुरुषे कृति। पा० ६, ३, १४,। इति सप्तम्या अलुक्। स्थास्थिन्स्थृनाम्। पा० ८, ३, ९७, १,। इति षत्वम्। सव्येष्ठा सारथिः॥

अर्त्तिसृधृधम्यश्यवितृभ्योऽनिः॥ १०३॥

ऋ सृ गतौ। धृञ् धारणे। धमिः सौत्रः। अम गतौ। अश भोजने। अव रक्षणे। तॄ प्लवनतरणयोः॥ एभ्योऽष्टभ्योऽनिः स्यात्। अरणिः स्यात् द्वयोर्मथ्यदारुण्यग्निसमिन्धन इत्यमरः॥ सरणिः पन्थाः। शरणिः पथि चामर इत्यजयः। तालव्यदन्त्यभेदेन द्विविधः। एवञ्च शॄ हिंसायमिति केचित्पठन्ति॥ सर्त्तेर्ण्यन्तादपि बहुलवचनादनिः। कृदिकारादिति ङीष्। सारणीषु परमम्बु शोभत इति चन्द्रः॥ धरणिः क्षितिः॥ धमनिः शिरा॥ अमनिर्गतिः॥ अश्यते भुज्यते राज्यमिन्द्रेणानयेत्यशनिर्वज्रम्॥ अवनिर्मही। हिनु मीनानि। पा० ८, ४, १५—१६,। इत्यत्रास्यापि ग्रहणात् णत्वं भवति। प्रावरणिरिति॥ तरणिः सूर्यनौकयोः। तरणिस्तरणे भानौ कुमार्योषधिभेदयोः। णान्ते ७३,। इति विश्वः। स्त्रियां नौस्तरणिस्तरिरित्यमरः। वैपूर्वाद्वैतरणिः प्रेतनदी॥ बाहुलकात् रञ्ज रागे। अतोऽप्यनिः। नलोपः। रजनिर्यामिनी। आवर्तमाना ददृशे दिवापि रजनाविवेत्यभिनन्दः। कृदिकारादिति ङीष्। रजनी नीलिकाद्राचा-

हरिद्रायामिनीषु च । नान्ते १२७ । इति विश्वः ॥ तथा दृणातेरप्यनिः । दरणिर्हृदयोरिति शब्दार्णवः ॥

आङि शृषेः सनश्छन्दसि ॥ १०४ ॥

शुषतेः सनन्तादाङ्युपपदे छन्दस्यनिः । हलन्ताच्च । पा० १, २, १०, । इति कित्वादिकार्यम् । आशुशुक्षणिरग्निर्वातिश्च ॥

कृषेरादेश्च धः ॥ १०५ ॥

कृष विलेखने ॥ अस्मादनिरादेर्धकारादेशश्च । धर्षणिर्बन्धकी । कृदिकारादिति ङीष् धर्षणी । धृषेरनिप्रत्ययेन सिद्धे वैचित्र्यार्थम् ॥

अदेर्मुट् च ॥ १०६ ॥

अदेरनिस्तस्य मुडागमश्च । अद्मनिर्वह्निः ॥

वृतेश्च ॥ १०७ ॥

वर्ततेरनिः । वर्तनिः पन्थाः । कृदिकारादिति ङीष् । वर्तन्येकपदीति चेत्यमरः ॥ चकारान्मुडागमोऽप्यत्रेति केचित् । वर्त्मनिरिति गोवर्धनः ॥

क्षिपेः किच्च ॥ १०८ ॥

क्षिपतेरनिः किद्भवति । क्षिपणिरायुधम् ॥

अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः ॥ १०९ ॥

अर्च पूजायाम् । शुच शोके । हु दाने । सृप्लृ गतौ । छद अपवारणे ण्यन्तः । छर्द वमने ॥ एभ्यः षड्भ्य इसिः स्यात् । अर्चिर्ज्वाला । ज्वालाभासोर्न पुंस्यर्चिरित्यमरः ।

नग्ननमिव सनिद्रं घूर्णते दैपमर्चिः। ११, १८, । इति माघः। इदन्तोऽप्यर्चिशब्दः। तथा च रूपरत्नाकरः। रजनिधमनि-कालान्यर्चितुण्डिः पुरन्ध्रिरिति॥ शोचिर्दीप्तिः। रोचिः शोचिरुभे क्लीव इत्यमरः॥ हविर्हवनीयम्॥ सर्पिर्घृतम्॥ इस्मन्त्रन्क्तिषु च। पा० ६, ४, ९७,। इति ह्रस्वत्वम्। छदिः पटलम्। अथ पटलं छदिरित्यमरः। छदिषे हितानि। छदिरुपधिबलेर्ढञ्। पा० ५, १, १३,। छादिषेयाणि तृणानि॥ छर्दिर्वमनव्याधिः। इदन्तोऽपि छर्दिशब्दः। विषपुरीषच्छर्द्यनुसरणमरकतपलाशशक्रच्छाणि। मन्दिरं सक्थि च नपुंसकम्। ७९,। इति वररुचिलिङ्गकारिका। छर्द्यतीसारशूलवानिति चिकित्साशास्त्रम्। छर्दौ चरं भारसर इति गोवैद्यकम्॥ बाहुलकादवतेरप्यःङ् पूर्वादिसिः। आविः प्राकाश्ये। ऊर्यादित्वाद्गतिसंज्ञा। आविःकृतमाविःकारः। वारुणीमदविशङ्कमथाविस्वचुषोऽभवदसाविव रागः। १०, १९,। इति माघे व्यवहितप्रयोगः प्रमादज इति भागवृत्तिः। उपसर्गप्रतिरूपकत्वात्समाधानीय इत्युपाध्यायसर्वस्वम्

वंहेर्नलोपश्च॥ ११॥

वहि वृद्धौ॥ अस्मादिसिः। नकारस्य लोपः वर्हिर्ना कुशशुष्मणोरिति कोशः। वर्हिषां चोपनेत्री। कु० सं० १, ६१,। इति कालिदासः॥

द्युतेरिसिन्नादेश्च जः॥ १॥

द्युत दीप्तौ॥ अस्मादिसिन् स्यादादेर्जकारादेशश्च। ज्योतिर्ना भास्करे ऽग्नौ च क्लीवं भद्योतदृष्टिष्विति रुद्रकोशः। ज्योतिरधिकृत्य कृतो ग्रन्थ इत्यधिकृत्य कृते ग्रन्थे। पा० ४, ३, ८७,। इत्यण्। संज्ञापूर्व्वको विधिरनित्य इति वृद्ध्यभावः। ज्योतिषं गणितशास्त्रमिति सुभूतिः। तदधीते तद्वेद। पा० ४, २, ५९—६०,। इत्यत्रार्थे उक्थादिपाठात् ठक्। ज्योतिषिको गणकः॥

**वसौ रुचेः संज्ञायाम्॥ ११२॥**

रोचतेर्वसुपूर्व्वात्संज्ञायामिसिन्। वसुरोचिर्यज्ञः॥ बाहुलकात् केवलादपि रुचेरिसिन्। रोचिर्ज्वालेति धातुप्रदीपिका॥

**भुवः कित्॥ ११३॥**

भवतेरिसिन्प्रत्ययः स्यात् स च कित्। भुविः समुद्रः।

**सहेर्धश्च॥ ११४॥**

सहतेरिसिन् धकारश्चान्तादेशः। सधिरनड्वान्॥

**पिवतेस्थुक्च॥ ११५॥**

पिवतेरिसिन् थुगागमश्च धातोः। पाथिश्चक्षुःसमुद्रयोः।

**जनेरुसिः॥ ११६॥**

जनी प्रादुर्भावे॥ अस्मादुसिः स्यात्। जनुर्जननम्॥ पचिवचीत्यत्र न्यासकृता बाहुलकान्मनेरप्युसिः प्रत्ययो दर्शितः। मनुस्। नभोङ्गिरोमनुषां वत्युपसंख्यानम्। पा० १, ४, १८, २,। इति मनुष्वत्॥

मनेर्धश्छन्दसि ॥ ११७ ॥

मन्यतेश्छन्दस्युसिः स्यात् धकारश्चान्तादेशः। मधुः पवित्रद्रव्यम् ॥

अर्तिपृवपियजितनिधनितपिभ्यो नित् ११८ ॥

ऋ गतौ। पृ पालनपूरणयोः। डुवप वीजतन्तुसन्ताने। यज देवपूजादौ। तनु विस्तारे। धन धान्ये। तप सन्तापे॥ एभ्यः सप्तभ्य उसिर्नित्स्यात्। अरुरादित्यो व्रणश्च। विध्व-रुषोस्तुद इत्यरुन्तुदः॥ परुर्ग्रन्थिः। ग्रन्थिर्ना पर्वपरुषी इत्य-मरः॥ वपुः शरीरम्। वपुर्भव्याकृतौ देहे। सान्ते २२,। इति विश्वः॥ यजुर्वेदः॥ तनुः शरीरम्। वपुषे तनुषे ऽनङ्ग-मिति सुबन्धुः॥ धनुः शरासनम्। धनुः पियालद्रुमे राशिभेदे शरासने चापि धनुर्भवेत्। सान्ते ४१,। इति विश्वः। धनुरस्त्रियामित्यमरः। धनुषी। धनुषः। एवंच धनुर्वं शविशुद्धो ऽपि निर्गुणः किं करिष्यतीति सकारान्तेनापि सङ्गच्छते। तत्प्रहरणमस्य। पा० ४, ४, ५७,। इति ठक्। धानुष्कः॥ तपुः सूर्य्याग्निशत्रुषु॥ बाहुलकाददेरप्युसिप्रत्ययः। प्रादुः प्राकाश्ये। प्रादुष्यं विदुः प्रादुर्भावम्॥

एतेर्णिच्च ॥ ११९ ॥

इण् गतौ। अस्मादुसिः स्यात्स च णित्। आयुर्जीवनम्। आयुषी। आयूंषि। जटापूर्वात् जटायुः पक्षिराजः। सम्पा तिर्वारुणिः ख्यातो जटायुश्च जटायुषीति शब्दार्णवः। स्वर्गादित्वाद्यत्। आयुष्यं तरते मृत्युरिति स्मृतिः। अचतुरे-

त्यच्। पा० ५, ४, ७७,। पुरुषायुषम्। पुरुषायुषजीविन्यो निरातङ्का निरो॰ यः। १, ६३,। इति रघुः॥

चक्षेः शिच्च॥ १२०॥

चक्षिङ्॥ अस्मादुसिः स्यात् स च शिद्भवति। शित्त्वा-दसार्वधातुकोक्तख्याञादेशाभावः। चष्टे रूपमनुभवन्त्य-नेनेति चक्षुर्नयनम्। शेष इति लक्षणं चाधिकारश्चेति। चक्षुषा गृह्यते रूपमिति शेषे। पा० ४, २, ९२,। इत्यत्र सूत्रे वृत्तिः॥

मुहेः किच्च॥ १२१॥

मुह वैचित्त्ये॥ अस्मादुसिः कित्। मुहुः पुनः पुनः। अव्ययम्। पुम्मुहुसोः प्रतिषेधो वक्तव्यः। पा०८, ३, ४१, १,। इति षत्वाभावः। मुहुस्कामा॥

बहुलमन्यत्रापि॥ १२२॥

अन्यत्रापि बहुलमुसिः स्यात् स च किद्भवति। आच-क्षुः॥ परिचक्षुः॥ बहुलवचनात् ल्युट्। विचक्षणः पण्डितः॥

कॄगॄशॄवृञ्चतिभ्यः ष्वरच्॥ १२३॥

कॄ विक्षेपे। गॄ निगरणे। शॄ हिंसायाम्। वृञ्वरणे। चते याचने॥ एभ्यः पञ्चभ्यः ष्वरच्। कर्वरी व्याघ्ररक्षसोः। निशायामपि कर्वरी। रान्ते ६१,। इति विश्वः। षित्त्वात् ङीष्। कर्वरी व्याघ्री राक्षसी च॥ गर्वरो ऽहङ्कारः। तद्यो-गात् गर्वरो नायकः॥ शर्वरी रात्रिः। अपि शार्वरो, ऽन्यत रसे घातके ऽन्यवत्। विश्व० रान्ते १६६,। इति॥

वर्वरः प्राकृतो जनः । वर्वरी नदीचरेत्यपि दृश्यते ॥ चत्वरमङ्गणं ख्यातं स्थण्डिलेष्वपि च दृश्यते ॥

नौ सदेः ॥ १२४ ॥

निपूर्वात्सीदतेः ष्वरच् ॥ सदिरप्रतेरिति षत्वम् । निषद्वरस्तु जम्बालः । अम० १,२, ३, ९, । निषद्वरी रात्रिः ॥

॥ इति महोपाध्यायजाजलीत्यपरनामधेयश्रीमदुज्ज्वलदत्तविरचितायामुणादिवृत्तौ

द्वितीयः पादः ॥ २ ॥

छित्वरच्छत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः ॥१॥

छित्वरादय एकादशशब्दाः ष्वरच्प्रत्ययान्ता निपात्यन्ते ॥ छिदिर् द्वैधीकरणे । तकारो ऽन्तादेशः । गुणाभावः । छित्वरो धूर्तः । छित्वरं छेदनद्रव्ये छित्वरो धूर्तवैरिणोः । रान्त० १५७, । इति विश्वः ॥ छद अपवारणे । छदते ऽपवारयतीति छत्वरो गृहकुञ्जयोः ॥ डुधाञ् । पा पाने । मा माने । एषामीत्वमन्त्यस्य । धीवरः कैवर्तः । धीवरी मत्स्यघातिनीति कोशः ॥ पीवरः स्थूलः ॥ मीवरो हिंसकः ॥ चिनोतेर्दीर्घत्वम् । चीवरं भिक्षुकप्रावरणम् ॥ तीरयतेर्गुणाभावो रेफलोपश्च । तीवरो जातिविशेषः स्यात् ॥ नयतेर्गुणाभावः । नीवरः परिव्राट् ॥ गाहू विलोडने । ह्रस्वत्वम् । गह्वरं गहनम् ॥ कटे वर्षादौ । कट्वरं व्यञ्जनम् ॥ दमेरीकारान्तादेशः । संयद्वरो नृपः । पदेः

सम्मद्वर इति पुरुषोत्तमदेवः॥ वाहुलकात् हु दान उपपूर्वः। उकारलोपः। उपह्वरो रथः॥ स्त्रियां ह्विरीत्यादि बोद्धव्यम्॥

इणषिञ्जिदीङुष्यविभ्यो नक्॥ २॥

इण् गतौ। षिञ् बन्धने। जि जिये। दीङ् क्षये। उष दाहे। अव रक्षणे॥ एभ्यो नक् स्यात्। इनो राज्ञि प्रभौ सूर्ये। इनः सूर्ये नृपे पत्यौ। नान्ते १,। इति विश्वः। सह इनेन वर्तत इति सेना। सेनयाभियात्यभिषेणयति॥ सिनः काणः॥ जिनो बुद्धः। जिनः स्यादतिवृद्धे ऽपि बुद्धे चार्हति जित्वरे। विश्वे नान्त० १,॥ दीनो दुर्गतः॥ उष्णामीषत्तप्तम्॥ ऊनस्वरेत्यूठ्। ऊनमसम्पूर्णम्। सर्वस्वे तु ऊनयतेरूनमिति साधितम्॥

फेनमीनौ॥ ३॥

एतौ निपात्येते। स्फायतेः फेशब्दादेशः। स्फायतेः फेनो डिण्डीरः। फेनः सलिलविकारः। फेनायते नदी॥ मीञ् हिंसायाम्। मीनो राश्यन्तरे मत्स्ये। विश्वे नान्त० १०,॥

कृषेर्वर्णे॥ ४॥

कृषतेर्वर्णे वाच्ये नक्। कृष्णो नीलो हरिः कृष्णा पिप्पली द्रौपदी तथा। वाच्यवन्मेचके कृष्णो भवेत्कृष्णो ऽर्जुने हरौ॥ व्यासकोकिलयोर्ध्वांक्षे कृष्णं मरिचलोहयोः। कृष्णा तु द्रौपदीनीलीद्राक्षरास्नु दृश्यते। णान्ते १८। इति

विश्वः । कार्ष्णिः । इञ् वाह्वादित्वात् ॥ घृ सेचने । बाहुलकादतो ऽपि भवति । टाप । घृणेति धातुप्रदीपटीका ॥

बन्धेर्ब्रधिबुधी च ॥ ५ ॥

बन्ध बन्धने । अतो नक् । ब्रध बुध इत्येतावादेशौ स्तः । ब्रध्नो भास्करः । बुध्नो मूलम् । बुध्नः शिफायां रुद्रे च । नान्ते १३, । इति विश्वः । अवाम्यबुध्नायनितम्बभागा इति भारविः ॥

धापॄवस्यज्यतिभ्यो नः ॥ ६ ॥

डुधाञ् । पॄ पालनादौ । वस निवासे । अज गतौ । अत सातत्यगमने ॥ एभ्यो नः । धाना भृष्टयवे स्त्रियः इत्यमरः ॥ पर्णं पत्रम् । सुपर्णः पन्नगाशनः । पर्णः स्यात्किंशुके पत्र इत्यमरः । सिध्मादित्वात्पर्णलः । पिच्छादित्वात्पर्णिलः ॥ वस्नो मूल्यमवक्रय इत्यमरः । वस्नो मूल्ये वेतने स्यात् । नान्ते १२, । इति विश्वः । वस्नक्रयविक्रयाट्ठन् । पा० ४, ४, १३ । वस्निकः । तद्धरति वहत्यावहतीत्यधिकृत्य वस्नद्रव्याभ्यां ठन्कनौ । पा० ५, १, ५१ । वस्निकः । आर्हीयठगधिकारे सो ऽस्यांशवस्नभृतयः । पा० ५,१,५६ । माहिषः ॥ अजेर्वीभावः । वेनः प्रजापतिः । तस्यापत्यं वेनाच्छन्दसीति कुर्वादिपाठात् ण्यः । वैन्यः पृथुः । वेनस्यापत्यं वैन्यः पृथुरिति विष्णुपुराणम् ॥ अत्न आदित्यः ॥ श्रु श्रवणे । बाहुलकादतो ऽपि नः । श्रोणः पङ्गुरित्यमरटीका ॥

लक्षेरट् च ॥ ७ ॥

लक्षेर्युरादिरुन्तान्नः स्यात्तस्याडागमश्च । लक्षणं चिह्नम् । तत्र भवम् । लाक्षणिकम् । लक्षणं नाम्नि चिह्ने च सौमित्रे चापि लक्षणः । विश्वः णान्ते ४२ । लक्षणा सारसी । महापुरुषमिव प्रकटमीनमकरशङ्खलक्षण इति कादम्बरीप्रयोगः । चकारान्मुडागमः । लक्ष्मणं नाम्नि चिह्ने च राम भ्रातरि लक्ष्मणः । लक्ष्मणा हंसयोषायां सारस्यां चैव लक्ष्मणा । लक्षेर्युटि साधनं परमते ॥

वनेरिच्चोपधायाः ॥ ८ ॥

वन सम्भक्तौ ॥ अस्मान्नः स्यात् । उपधाया इत्वम् । वेन्ना नदी ॥

सिवेष्टेर्यु च ॥ ९ ॥

सीव्यतेर्नः स्यात् । टिभागस्य यूआदेशः । सामर्थ्याद्गुणः । स्यून आदित्यः । बाहुलकात्केवलोऽपि नप्रत्यय ऊडादेशो गुणः स्यात् । स्योन इति । छ्वोः शूडनुनासिके च । पा० ६, ४, १९ । इत्यत्र वृत्तिः ।

कॄवृजॄषिद्रुपन्यनिस्वपिभ्यो नित् ॥ १० ॥

कॄ विक्षेपे । वृ वरणे । जॄ वयोहानौ । षिञ् बन्धने । द्रु गतौ । पन स्तुतौ । अन प्राणने । ञिष्वप शये ॥ एभ्योऽष्टधातुभ्यो नो निद्भवति । कर्णः श्रोत्रं क्षत्रियविशेषश्च । कर्णः पृथासुते ज्येष्ठे सुवर्णालौ श्रुतावपि । विश्वे णान्त० १४ । कर्णललाटात् । पा० ४, ३, ६५ । इति कन् । कर्णिका तालपत्रं स्यात् । अम० २, ६, ३, ५ ॥ वर्णो ब्राह्म-

णादिः । वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपयशोचरे । विश्वे णान्त० १५ । शुक्लादिश्च ॥ जर्णश्चन्द्रः । जर्णश्चन्द्रे च वृक्षे चेति विश्वः ॥ सेना वाहिनी । हस्त्यादिसाधनम् । सह इनेन वर्तत इति व्युत्पत्तौ प्रपञ्चार्थम् ॥ द्रोणो मानविशेषश्च काको ऽर्जुनगुरुस्तथा । द्रोणः कृपीपतौ कृष्णकाके स्यादाढके ऽपि च । विश्वे णान्त० ९ । गौरादित्वात् ङीप् । द्रोणी जलसेचनी । द्रोणी काष्ठाम्बुवाहिन्यां गवां घासभुजिस्थितौ । णान्ते १० । इति विश्वः ॥ पन्नो नीचैर्गतिः । पन्नगः सर्पः ॥ अन्नमोदनः । अदेर्निष्ठायामन्न इति निर्देशादन्नमित्यदो जग्धिः । पा० २, ४, ३६ । इति सुत्र एवं चानिग्रहणं प्रपञ्चार्थमिति ॥ स्वप्नो निद्रा । स्वपेरपि स्वपो नन् । पा० ३, ३, ९१ । इति सिद्धत्वात्प्रपञ्चार्थः । अथवानेन वर्तमानकालार्थः स्वपेश्चाभाद्यर्थः ॥

धेट इच्च ॥ ११ ॥

धेटो नः स्यादिकारश्चान्तादेशः । धेनः सिन्धुर्नदीधेना ॥

तृषिशुषिरसिभ्यः कित् ॥ १२ ॥

ञितृष पिपासायाम् । शुष शोषणे । रस शब्दे ॥ एभ्यो नः कित्स्यात् । तृष्णा लिप्सापिपासयोः ९ णान्ते २२ । इति विश्वः शुष्णः सूर्यो वह्निश्च ॥ रस्नं द्रव्यम् ॥

सुञो दीर्घश्च ॥ १३ ॥

सुनोतेर्नः स्याद्धातोर्दीर्घश्च । सूना जन्तुवधस्थानम् । सूना च गलशुण्डिकेति नान्ते ऽमरः ॥

रमेस्त च ॥ १४ ॥

रमेर्ण्यन्तान्नप्रत्ययः स्यात्तकारश्चान्तादेशः । रमयति हर्षयतीति । रत्नं स्वजातिश्रेष्ठे ऽपि रत्नं माणिक्यमिष्यते । न रत्नमन्विष्यति मृग्यते हि तत् ॥ जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते । अश्वरत्नं गजरत्नं स्त्रीरत्नं दुष्कुलादपि । चाणक्यशतकम् १६, ॥

रास्नासास्नास्थूणावीणाः ॥ १५ ॥

एते नप्रत्ययान्ता निपात्यन्ते ॥ रसतेरुपधाया दीर्घः । रास्ना गन्धद्रव्यम् ॥ षस स्वप्ने । पूर्व्ववत् दीर्घः । सास्ना गोगलकम्बलः ॥ तिष्ठतेरूत्वं प्रत्ययस्य च णत्वम् । स्थूणा गृहस्तम्भः ॥ वी गतौ । गुणाभावो णत्वं च । वीणा वल्लकी । सत्यापपाशेति णिच् । वीणयोपगायति । उपवीणयति ॥

गादाभ्यामिष्णुच् ॥ १६ ॥

गै शब्दे । डुदाञ् ॥ आभ्यामिष्णुच् । आद्गुणः । गेष्णुर्गायनः । देष्णुर्दाता । सूदेष्णुर्विराभार्य्या ॥ एष्णुगयं प्रत्यय इति काचिद्वृत्तिः । तदाप्याती लोपे तदेव रूपम् । स्वरे तु विशेषः ॥

कृत्यशूभ्यां क्स्नः ॥ १७ ॥

कृती वेष्टने । अशूङ् व्याप्तौ ॥ आभ्यां क्स्नः स्यात् । कृत्स्नं निरवशेषं त्रिषु ॥ अक्ष्णमखण्डम् । व्रश्चभ्रस्जेत्यादिना । पा० ८, २, ३६, । षत्वम् ।

## तिजेर्दीर्घश्च ॥ १८ ॥

तिज निशाने ॥ अतः क्स्नो दीर्घत्वं च धातोः। कुत्वादिकार्यम्। तीक्ष्णं तिग्मलोहयोः। तीक्ष्णं सामुद्रलवणे तीक्ष्णः स्यात्तीव्रपूरुषे। तीक्ष्णं चारे च तिग्मात्मत्यागिनोर्वाच्यवत्। णान्ते १३,। इति विश्वः ॥

## श्लिषेरच्चोपधायाः ॥ १९ ॥

श्लिष आलिङ्गने ॥ अतः क्स्नो ऽकारश्चोपधायाः। श्लक्ष्णं सुकुमारं त्रिषु। मुण्डमिश्रेति। पा० ३, १, २१,। णित्। श्लक्ष्णयति ॥

## यजिमनिशुन्धिदसिजनिभ्यो युच् ॥ २० ॥

यज देवपूजादौ। मन ज्ञाने। शुन्ध शुद्धौ। दसु उपक्षये। जनी प्रादुर्भावे ॥ एभ्यो युच् स्यात्। यज्युरध्वर्युः। मन्युः शोकः ॥ शुन्ध्युरग्निः ॥ दस्युस्तस्करः ॥ जन्युः शरीरी ॥ निरनुनासिकत्वादनादेशो न भवति ॥

## भुजिमृङ्भ्यां युक्त्युकौ ॥ २१ ॥

भुज। मृङ्॥ आभ्यां यथाक्रमं युक्त्युकौ। भुज्युर्भाजनम्। मृत्युः स्त्रीपुंसयोरन्ते। मृत्युर्मरणदेवयोः। यान्ते १२,। इति विश्वः। कन्दर्पो दर्पकः कामः शिखी मृत्युजरान्वित इति कोशान्तरम् ॥

## सर्त्तेरयुः ॥ २२ ॥

सृ गतौ ॥ अस्मादयुः स्यात्। सरयुर्नदी। तनुर्धेनुरर-च्चुः प्रियङ्गुः सरयुः कुडुरिति वाचस्पतिकोशः। ऊङ्तः।

पा० ४, १, ६६,। इत्यूङि सरितः सरयूश्चिप्रासरस्वतीचन्द्रभागाद्या इति गोपालितः। चक्रे चिदिवनिःश्रेणी सरयूरनुयायिनाम्। १५, १००,। इति रघुः। सर्तैरयूरिति पारायणे दृश्यते॥

पानीविषिभ्यः पः॥ २३॥

पा रक्षणे। णोञ् प्रापणे। विषॢ व्याप्तौ॥ एभ्यः पः स्यात्। पान्ति रक्षन्त्यस्मादात्मानमिति पापं किल्बिषम्। तद्योगात्पापः पुरुषः॥ नेपः पुरोहितः। बाहुलकाद्गुणाभावे नीपं दृष्ट्वा हरितकपिशं। मेघ० २१,। इति कालिदासः। नीपो धूलीकदम्बे स्यान्नीलाशोके च वेधुनि। पान्ते ५,। इति विश्वः। कृपण इव नवनीपकोपशोभितः॥ वेष्यः पानीयम्॥

च्युवः किच्च॥ २४॥

च्युङ् गतौ॥ अस्मात्पः कित्स्यात्। च्यवन्ते भाषन्तेऽनेनेति च्युपोवक्त्रम्। च्यवतिरत्र भाषणे॥

स्तुवो दीर्घश्च॥ २५॥

ष्टुञ् स्तुतौ॥ अतः पो धातोर्दीर्घश्च। स्तूपो भूमिसमुच्छ्रायश्चैत्यं च॥ एतत्सूत्रं सतीवृत्तौ न दृश्यते। सर्व्वत्र तु ष्टूप स (मुच्छ्राय) इत्यस्मात् घञि स्तूप इति साधितम्। अतोऽनार्षमिदमिति लक्ष्यते॥

सुसृभ्यां निच्च॥ २६॥

षुञ् अभिषवे। सृ हिंसायाम्॥ आभ्यां पः स्यात्स च

निङ्गवति। क्विदित्यनुवृत्तेश्च कित् धातोर्दीर्घत्वं च। सूपो व्यञ्जनभेदे स्यात्सूपकारेऽपि कीर्तितः। पान्ते ३,। इति विश्वः॥ बहुलवचनादुत्वं रपरत्वं च। हलि च। पा० ८, २, ७७,। इति दीर्घत्वम्। शूर्पमस्त्री प्रस्फोटने मानविशेषेऽपीत्यमरः॥

कुयुभ्यां च॥ २७॥

कु शब्दे। यु मिश्रणे॥ आभ्यां पः स च किङ्गवति धातोर्दीर्घत्वं च। कुर्वन्ति दृप्ता मण्डूका अस्मिन्निति कूपमुदकपानम्। पात्रेसम्मितादित्वात्कूपमण्डूकः॥ यूपो यज्ञस्तम्भः। बहुव्रीहौ प्रकृत्या पूर्वपदम्। पा० ६, २, १,। इत्यत्र वृत्तौ निग्रहणं दीर्घग्रहणं चानुवर्त्य यूपशब्दो व्युत्पादितः॥

खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः॥ २८॥

सप्तैते पप्रत्ययान्ता निपात्यन्ते खनतेर्नकारस्य षत्वम्। खष्पो बलात्कारः। खष्पः क्रोधबलात्काराविति विश्वः। शील समाधौ। ह्रस्वत्वम्। शिल्पम् कौशलम्॥ शसु हिंसायाम्। निपातनात् षत्वम्। शष्पं बालतृणं प्रोक्तं शष्पं स्यात्प्रतिभाक्षयः॥ वाष्ट्र लोडने। अन्त्यस्य षत्वम्। वाष्पमूष्मणि चाश्रुणि। वाष्पोनेत्रजलोष्मणोरितिकोशान्तरम्॥-रौतेर्दीर्घत्वम्। रूपमाकृतिः। रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः। पान्ते १,। इति विश्वः॥ पॄ पालनादौ। पर्पं गृहं बालतृणं च। तेन चरति। पर्पादिभ्यः ष्ठन्। पा० ४, ४, १०,। पर्पिकः। पर्पिकी। पर्पिकम्॥ तल प्रतिष्ठाकरणे। चुरादिणिचो

ऽनित्यत्वात् णिङभावः। तल्पं शय्याट्टदारेषु पान्ते ऽमरः॥ बाहुलकाच्चमेरपि पः। चम्पा नगरो। पुरी चम्पा तु मालिनीति विश्वः॥ पातङ्कर्स्वत्वं सुट् च। पम्पा नदीति पुरुषोत्तमदेवः। अन्ये तु पर्पशब्दस्थाने पम्पाशब्दं पठन्ति॥

स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच॥ २६॥

स्तन गद देवशब्दे चुरादिखन्तौ। हृषतुष्टौ। पुष पुष्टौ। गदिरुक्त एव। मदी हर्षग्लेपनयोरिति घटादिः॥ एभ्यो ण्यन्तेभ्य इत्नुच्। अयामन्तेति। पा० ६, ४, ५५,। णेरयादेशः। स्तनयित्नुर्वलाहकः॥ हर्षयित्नुः सुवर्णम्॥ पोषयित्नुः पिको मतः पोषकश्च॥ गदयित्नुः शब्दः कामुकश्च वावदूकश्च॥ मदयित्नुर्मदिरा॥

कृहनिभ्यां क्त्नु॥ ३०॥

करोतिहन्तिभ्यां त्नुः स्यात्। ककारः कित्कार्यार्थः॥ कृत्नुः शिल्पी॥ अनुदात्तोपदेशेत्यादिना। पा० ६, ४, ३७,। अनुनासिकलोपः। हत्नुः स्यात् व्याधिशस्त्रयोः॥

गमेः सन्वच्च॥ ३१॥

गमेः त्नुः सन्वत्कार्यं च॥ जिगत्नुः प्राणः। पूर्ववदनुनासिकलोपः॥

दाभाभ्यां नुः॥ ३२॥

ददातिभातिभ्यां नुः स्यात्॥ दानुर्दाता विक्रान्तश्च॥ भानुरर्कौ दीप्तिश्च। भानू रश्मिदिवाकरावित्यमरः। स्वःपूर्वात्स्वर्भानू राहुः। चित्रभानू रवौ वह्नौ बृहद्भानुस्तुपावके॥

वचेर्गश्च ॥ ३३ ॥

वचेर्नुः स्याद्गकारश्चान्तादेशः ॥ वग्नुर्वाचालः ॥

धेट इच्च ॥ ३४ ॥

धयतेर्नुः स्यादिकारश्चान्तादेशः ॥ धयति तामिति धेनुर्नवप्रसूता गौः ॥ स्त्रियां कन्। धेनुका हस्तिनी मतेत्यमरः ॥

सुवः कित् ३५ ॥

सूतेर्नुः कित्स्यात्। सूनुः पुत्रे ऽनुजे रवौ। नान्ते १२,। इति विश्वः ॥

जहातेर्द्वे अन्तलोपश्च ॥ ३६ ॥

ओहाक् त्यागे॥ ततो नुः स्यात्। द्वित्वमन्त्यलोपश्च धातोः। जह्नुर्नाम ऋषिः कश्चिदपत्यं तस्य जाह्नवी ॥

स्थो णुः ॥ ३७ ॥

तिष्ठतेर्णुः स्यात् ॥ स्थाणुः स्यात्कीलशूलिनोः। स्थाणुः कीले स्थिरे हरे ॥

अजिवृरीभ्यो निच्च ॥ ३८ ॥

अज गतौ। वृङ् सम्भक्तौ। री गतिरेषणयोः ॥ एभ्यो णुर्नित्स्यात्। अजेर्वीभावः। वेणुर्नृपान्तरे वंशे। णान्ते २९,। इति विश्वः ॥ वर्णुर्नददेशभेदयोः ॥

यस्य वर्णौ वुक्। पा० ४,२,१०३,। इत्यत्र सूत्रे ग्रहणम् ॥ रेणुर्द्वयो रजस्यपि। रेणुर्द्वयोः स्त्रियां धूलिरित्यमरः। हेमरेणुः सुरेणुः स्यादित्युत्तररत्नम्। त्रसरेणुः सुरेणुः स्यादित्युत्तररत्नकाण्डम् ॥

विषेः किच्च ॥ ३९ ॥

विष्लृ व्याप्तौ ॥ अतो नुः स्यात् स च कित् । विष्णुर्नारायणः । वैष्णवो यस्य सेवकः । सर्वं विष्णुमयं जगदिति । केचित् विश प्रवेशन इत्यस्य ग्रहणमिच्छन्ति । तथा च विष्णुपुराणम् । यस्माद्विष्णुमयं सर्वं यच्चराचरमुच्यते । तस्मात्नीयते [विष्णुः स] विशधातोः प्रवेशनात् ॥

कृदाधारार्चिकलिभ्यः कः ॥ ४० ॥

डुकृञ् । डुदाञ् । डुधाञ् । रा ला दाने । अर्च पूजायाम् । कल गतौ ॥ एभ्यः कः । बहुलवचनान्न ककारस्येत्संज्ञा । कर्को धवलघोटकः । कर्कः कर्कैतने वह्नौ शुक्लाश्वे दर्पणे घटे । कान्ते २८, । इति विश्वः ॥ दाको यजमानः ॥ धाकोऽनड्वानाधारश्च ॥ राका पौर्णमासी । राका तु सरिदन्तरे । कच्छूनवरजः कन्यापूर्णेन्दुपूर्णिमासु च । कान्ते ४७, । इति विश्वः । एषु त्रिषु केऽण इति ह्रस्वो न भवति बहुलवचनादेव ॥ अर्कः सूर्यार्कपर्णयोः । अर्को अर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ । कान्ते २७, । इति विश्वः ॥ कल्कं किल्बिषदम्भयोः । कल्कः पापाशये दम्भे विट्किट्टयोरपि । कान्ते ० ४२, । इति सः ॥ बाहुलकाद्रमेरपि कः । रङ्को दुर्गतः । रङ्कस्तु कृपणे मन्दे । कान्त० ४१, । इति च । कपिलिकादित्वाल्लत्वम् । टाप् । लङ्का राक्षसपुरी । लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च । विश्वे कान्त० ४६, । इति । शाखा च ॥ तथा

फलेरपि । फल्को विशोधिताङ्गे स्यादिति गोवर्धनः ॥

स्तृवृभूशुषिमुषिभ्यः कक् ॥ ४१ ॥

स्तृ गतौ । वृञ् वरणे । भू सत्तायाम् । शुष शोषणे । मुष स्तेये ॥ एभ्यः कक् । स्तृक उत्पलवातयोः । स्तृको वाणा-निलोत्पले । विश्व कान्त० २७,॥ वृकः श्वापदकाकयोः । वृकः काके च पेचक इति विश्वः । स्वार्थे वृकाट्टेण्यण् । पा० ५,३,११५, । वार्केण्यः । बहुषु तद्राजस्येत्यादिना । पा० २,४,६२, । लुक् । वृकाः ॥ भूकं छिद्रम् । भूकं छिद्रे च काले च । भूकं जलनिर्गमविवरम् ॥ शुष्को नीरसः सुष्को अण्डः । सुष्कौ ऽण्डकोषे सङ्घाते । तद्योगादूषसुषीति । पा० ५,२,१०७, । सुष्करः । बाहुलकादवतिमवतिभ्यां च कक् । ज्वरत्वरेत्यादिनोडादिकार्यम् । बाहुलकाद्गुणः, ओको राशिस्थानम् मूको वचनवर्जितः ओको राशिस्थाने । मूको वाग्हीने च ॥

शुकवल्कोल्काः ॥ ४२ ॥

शुकादयः कप्रत्ययान्ता निपात्यन्ते ॥ शुभ दीप्तौ । अन्त्यस्य लोपः । शुको व्याससुते कीरे शुकं साङ्ग्निपर्णक इति धरणिः ॥ वल सम्वरणे । वल्कं वल्कलमस्त्रियामित्यमरः ॥ उष दाहे । षकारस्य ललम् । टाप् । ओषतीत्युल्का ज्वालाविभावसोरिति सुभूतिचन्द्रः ॥

इण्भीकापाशल्यतिमर्चिभ्यः कन् ॥ ४३ ॥

इण् गतौ । ञिभी भये । कै शब्दे । पा पाने । शल

गतौ । अत सातत्यगमने । मर्च इति सौत्रो धातुः ॥ एभ्यः कन् । एके मुख्यान्यकेवलाः । अम० ३,४,१,१६, । एकं तु केवले श्रेष्ठ इतरस्मिंस्तु वाच्यवत् । कान्त २७, । इति विश्वे भेको मण्डूकमेघयोः । कान्त० ३६, । इति विश्वे । शिली गण्डूपदी भेकीत्यमरः काको वायसः ॥ पिबति स्तनमिति पाकः । पाकः शिशौ जरानिष्ठापचनक्लेदनेषु । कान्ते ३४, । इति सः ॥ शल गतौ । शल्कं वल्कलम् ॥ अत्कः पथिकः शरीरावयवश्च ॥ मर्कः शरीरवायुः ॥ बाहुलकात् शो तनूकरणे । षो अन्तकर्मणि । आभ्यामपि कन् । शाकं साकमिति वर्णदेशना । शाको माचादौ द्वीप इति तालव्यादौ नानार्थामरमाला ॥

नौ हः ॥ ४४ ॥

ओहाक् त्यागे ॥ अतो निशब्द उपपदे कन् स्यात् । निहाका गोधिका समे इत्यमरः ॥

नौ सदेर्डिच्च ॥ ४५ ॥

षद्लृ विशरणे ॥ अतो नौ कन् स च डित् । डित्वात् टिलोपः । सदिरप्रतेरिति षत्वम् । निष्को ऽस्त्री हेम्नि तत्पले निष्कः स॰ष्टसुवर्णशते निष्को दीनारकर्षयोः । कान्ते ४४, । इति विश्वः ॥

स्यमेरीट् च ॥ ४६ ॥

स्यमु शब्दे ॥ अतः कन् तस्य चेडागमः । स्यमीको वल्मीको वृक्षभेदश्च ॥ ह्रस्व इडागमो भवतीति केचित् । तेषां स्यमिकः ॥

अजियुधूनीभ्यो दीर्घश्च ॥ ४७ ॥

अज गतिक्षेपणयोः। यु मिश्रणे। धूञ् कम्पने। णीञ् प्रापणे॥ एभ्यः कन्नेषां दीर्घत्वं च। तत्सामर्थ्याद्गुणो न भवति अजेर्वीभावः। वीकः स्याद्वातपक्षिणोः॥ यूका ओकोदनी। यूकाभयेन न हि केशविमोचनं स्यादिति शृङ्गारतिलकम्। यूकालिक्षम्। क्षुद्रजन्तवः। पा०२,४,८। इत्येकवद्भावः॥ धूको वायुः॥ नीको वृक्षविशेषः स्यादिति सर्वस्वम्॥

ह्रियो रश्च लो वा ॥ ४८ ॥

ह्री लज्जायाम्॥ अतः कन् धातोर्दीर्घत्वं च रस्य च लो वा। ह्रीका ह्लीका त्रपा मता॥

शकेरुनोन्तोन्त्युनयः ॥ ४९ ॥

शक्लृ शक्तौ॥ अत उन उन्त उन्ति उनि इत्येते चत्वारः प्रत्ययाः स्युः। शकुनः शकुन्तः शकुन्तिः शकुनिः पक्षिनामानि। शकुनं च शुभाशंसानिमित्ते शकुनः खगे। नान्त ४६,। इति विश्वः। शकुन्तौ भासपक्षिणावित्यमरः। शकुन्तिः शकुनिः पक्षिसामान्ये। शकुन्तलाभरतेन। १,२०। इति विदग्धमुखमण्डनम्॥

भवो क्विच् ॥ ५० ॥

भू सत्तायां॥ अतो क्विच्प्रत्ययः स्यात्॥ भवन्तिर्वर्तमानः कालः। कृदिकारादिति ङीष्। भवन्ती लटो ऽन्याचार्य्यसंज्ञा। तथा चास्तिर्भवन्तीपरः प्रयोक्तव्य इति भाष्यम्॥ बहुलवचनात्कमेरपि प्रत्ययादिलोपे कुशब्दादेशः। कुन्तिः।

इतो मनुष्यजातेः । पा० ४,१,६५, । इति ङीष् । कुन्ती ॥ अवतेश्च । अवन्तिः । अवन्ती । अवन्तिनगरीनाथं द्रष्टुमिच्छामि सत्वरमिति सर्वस्वम् ॥ तथा वदेश्च । वदन्तिः । वदन्ती । किम्वदन्ती जनश्रुतिः । अम० १,१,५,७, ।

न्युच् क्षिपेश्च ॥ ५१ ॥

क्षिपतेः कन्युच्प्रत्ययः स्यात् । चकाराद्भवतेरपि ॥ क्षिपण्युर्वसन्तः ॥ भुवन्युः स्वामिसूर्ययोः ॥

अनुङ् नदेश्च ॥ ५२ ॥

णद अव्यक्ते शब्दे ॥ अतश्चानुङ्प्रत्ययः स्यात् । चकारात् क्षिपेश्च ॥ नदनुर्मेघः ॥ क्षिपणुर्वातः ॥

कृवृदारिभ्य उनन् ॥ ५३ ॥

कृ विक्षेपे । वृञ् वरणे । दृ विदारणे ॥ एभ्य उनन् । करुणो वृक्षभेदः स्यात्करुणा च कृपा मता ॥ करुणस्तु रसे वृक्षे कृपायां करुणा मता । णान्ते २१, । इति विश्वः । करुणा शीलमस्येति कारुणिकः ॥ वरुणो दिक्पतौ तरौ । इन्द्रवरुणेति ङीषानुकौ । वरुणानी ॥ दारुणं भीषणम् ॥ वरण इत्यपि पारायणम् । वरणशब्दस्य च वलीयवकारत्वेन ख्यातत्वात् ॥

त्रो रश्च लो वा ॥ ५४ ॥

तरतेरुनन् स्यात् । रेफस्य वा लकारादेशः ॥ तरुणतलुनौ यूनि । तरुणो वृक्षभेदो युवा च । गौरादित्वात्तरुणी तलुनी समे । तलुनी युवती समे इत्यमरः ॥

क्षुधिपिशिमिथः कित् ॥ ५५ ॥

क्षुध बुभुक्षायाम् । पिश अवयवे । मिथ सौत्रो धातुः ॥ एभ्य उनन् कित्स्यात् । क्षुधुनो म्लेच्छजातिः ॥ पिशुनौखलसूचकौ नान्तेऽमरः । पिशुनं कुङ्कुमे क्रूरे सूचके त्वभिधेयवत् । विश्वे नान्त० ४५,॥ मिथुनं राशियुग्मयोः ॥

फलेर्गुक्च ॥ ५६ ॥

फल निष्पत्तौ ॥ अस्मादुनन् गुगागमश्च धातोः । फल्गुनो अर्जुनः । गौरादित्वात् ङीष् । फल्गुनी । उत्तरपदाच्च उत्तरफल्गुनी । पूर्वफल्गुनी । अण् च । फाल्गुनी पौर्णमासी । फाल्गुनः पार्थः ॥

अशेर्लश च ॥ ५७ ॥

अश भोजने ॥ अस्मादुनन् लशादेशश्च धातोः । लशुनमौषधमहाकन्दः ॥

अर्जेर्णिलुक्च ॥ ५८ ॥

अर्जेर्ण्यन्तादुनन् णेश्च लुक् ॥ अर्जुनः पार्थशुक्लयोः । अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः । विश्व० नान्ते ८२, । स्त्रियां गौरादित्वात् ङीष् । अर्जुनी सौरभेयी स्यादित्यमरः ॥

तृणाख्यायां चित् ॥ ५९ ॥

अर्जयतेरेव तृणाख्यायामुनन् चिद्भवति । अन्तोदात्तो अर्जुनस्तृणे । फिषो अन्त उदात्त इत्यधिकृत्यार्जुनस्य तृणाख्या चेत् । १,१७, । फिट्सूत्रं ॥

अर्तेश्च ॥ ६० ॥

अर्तेरुनन् चित्स्यात् ॥ अरुणः सूर्यकुष्ठयोः ॥ अरुणो व्यरागे ऽर्के सन्ध्यारागे ऽर्कसारथौ । अरुणातिविशायां स्याद्रक्तो वाच्यवदिष्यते । णान्ते ३०, । इति विश्वः ॥

अजियमिशीङ्भ्यश्च ॥ ६१ ॥

अज गतिक्षेपणयोः । यम उपरमे । शीङ् स्वप्ने ॥ एभ्य उनन् स्यात्स च कित् । अजेर्वीभावः । वीयते गम्यते अत्रेति वयुनं देवमन्दिरम् ॥ यमुना नदीभेदः ॥ शयुनो ऽजगरः । पृथग्योगो वैचित्र्यार्थः ॥

वृतॄवदिहनिकमिकषिभ्यः सः ॥ ६२ ॥

वृ वरणे । तॄ प्लवनतरणयोः । वद व्यक्तायां वाचि । हन हिंसागत्योः । कमु कान्तौ । कष शिषेति दण्डकः ॥ एभ्यः षड्भ्यः सः । वर्षं सम्वत्सरे वृष्टौ जम्बूद्वीपे घने ऽपि च । प्रावृट्काले च वर्षाः स्युः । षान्ते ४, । इति सः । वर्षः स्याद्वरिषो ऽपि चेति चन्द्रः । मूर्धरेफा विकल्पान्ते छन्दो-भङ्गभयादिनेति सः ॥ तर्षः प्लवसमुद्रयोः ॥ वत्सो बालो ऽब्दं वक्षः । वत्सस्तर्णकपुत्रादिवर्षे वत्सं तु वक्षसि सान्ते ६, । इति विश्वः । श्रीवत्सो विष्णुहृदयरोमावर्तविशेषः । ततः श्रीवत्सलाञ्छनः ॥ हंसो निर्लोभसूर्ययोः । हंसो विहगभेदे स्यादर्के विष्णौ हयान्तरे । निर्लोभनृपतौ हंसः शरीरमरुदन्तरे । सान्ते ८, । इति विश्वः ॥ कंसो भाजनदैत्ययोः । स्यात्कांसस्तैजसद्रव्ये कंसः पात्रे च दृश्यते । दृष्टः

कंसो विशेषेण दैत्यदानवभेदयोरिति शाश्वतः। कसि गतिशातनयोरित्यस्मात्पचाद्यचि कंस इति धातुप्रदीपटीका॥ कक्षो वनभुजामूले। कक्षौ च तृणवीरुधावित्यमरः। जन्तोरवयवे कक्षः कच्छवीरुत्तृणादिषु। कक्षा स्यात्परिधानस्य पश्चादञ्चलपल्लव इति सः॥ बाहुलकात् राजतेरपि सः कपिलि कादित्वाद्वा लत्वम्। राक्षा लाक्षा रञ्जनद्रव्यं॥ तथा यु मिश्रणे योषा स्त्रीत्यनागमः। जुष परितर्के जोषयति योषा जोषेति चन्द्रेण च चवर्गादिरुक्तः॥

प्लुषेरच्चोपधायाः॥ ६३॥

प्लुष दाहे॥ अतः सः। उकारस्याकारः। प्लक्षो द्वाः पार्श्वपर्कट्योः। प्लक्षो द्वीपविशेषे स्यात्पर्कटीगर्दभाण्डयोः। पिप्पले द्वारपार्श्वं च गृहस्य परिकीर्तितः। क्षान्ते ७,। इति विश्वः॥

मनेर्दीर्घश्च॥ ६४॥

मन ज्ञाने॥ अतः सो धातोर्दीर्घश्च। मांसं पिशितमुद्दिष्टं सिध्मादित्वान्मांसलः॥

अशेर्देवने॥ ६५॥

अशू व्याप्तौ॥ अतो देवने वाच्ये सः। व्रश्चभ्रस्जेत्यादिना षत्वादिकार्यम्। अक्षो रथावयवे विभीतके च। अक्षाणि पण्डितजना विदुरिन्द्रियाणि। अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः। आत्मज्ञे पाशके चाक्षं तुत्थे सौवर्चलेन्द्रिये। क्षान्ते २,। इति सः॥

स्नुव्रश्चिकृत्यृषिभ्यः कित् ॥ ६६ ॥

स्नु प्रस्रवने । ओव्रश्चू छेदने । कृती छेदने । ऋषी गतौ ॥ एभ्यः सः कित्स्यात् । स्नुषा वधूः ॥ संप्रसारणादिकार्य्यम् । वृक्ष स्तरुः । वृक्ष वरणे । अतो ऋच्यावृणोतीति वृक्ष इति सिद्धे प्रपञ्चार्थं वृश्चिग्रहणम् ॥ कृत्समुदकं ॥ ऋक्षं नक्षत्रम् ॥ बाहुलकात् मिष हिंसायाम् । अतो अप्याङ्पूर्वात्सः । आमिक्षा क्षीरवैकृती । ईक्षतेरामीक्षा । उभयोः सारासारं विद्वद्भिर्निरूपणीयं । आमिक्षीयं दधि क्षीरं पुरोडाश्यं तथौषधम् । ५,१२,। इति भट्टिः ॥ लिश गतौ । रुह जन्मनि । षत्वढत्वकुत्वादिकार्य्यम् । लिक्षा ओकोदनी ॥ रुक्षः पादपजातो स्यात् त्रिष्वप्रेमण्यचिक्कणे । क्षान्ते १२,। इति सः । गौरादित्वाद्रौक्ष्यः ॥

ऋषेर्जातौ ॥ ६७ ॥

ऋषतेर्जातौ सः । स च किद्भवति । ऋक्षो ऽद्रिभेदे भल्लूक इति च । पूर्वसूत्रेण सिद्धे जातौ दृष्टमिदं प्रपञ्चार्थम् ।

उन्दिगुधिकुषिभ्यश्च ॥ ६८ ॥

उन्दी क्लेदने । गुध रोषे । कुष निष्कर्षे ॥ एभ्यः सः कित् स्यात् । उत्सः प्रस्रवणं ॥ गुत्सः स्तवकः स्तम्बस्तृणादिनः । गुच्छः स्यात् स्तवके स्तम्बे हारभेदे च दृश्यत इति चवर्गादिप्रकरणे धरणिकोशः । ककारान्तो ऽप्ययम् । स्तवके गुत्सगुत्सकावित्यचलकोशः ॥ कुक्षो जठरम् ॥

गृधिपण्योर्दकौ च ॥ ६९ ॥

गृधु अभिकांक्षायाम्। पण स्तुत्यादौ॥ आभ्यां सः कित्स्यात् दकारककारौ चान्त्यादेशौ यथाक्रमम्। गृत्सः कामदेवः॥ पक्षो मासार्द्धः। पक्षो मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः। केशादेः परतो वृन्दे बले सखिसहाययोः। चान्त० ५.। इति विश्वे। सविधौ पचिग्रहणेनैव सिद्ध इह ककारणं वैचित्र्यार्थम्। गृत्स इत्यत्र गुणाभावः किदित्यनुवृत्तेः। गृधेरादिचतुर्थनिवृत्त्यर्थो दकारो विधीयते॥

अशेः सरन्॥ ७०॥

अशू व्याप्तौ॥ अतः सरन्। षत्वादिकार्यम्। अक्षरं वर्णनिर्माणं वर्णमप्यक्षरं विदुः। अक्षरं न क्षरं विद्यादश्नोतेर्वा सरो ऽक्षरमिति स्मृतिः॥ वेदे पुनरक्षरशब्द उदके ऽपि वर्तत उणादयो बहुलमित्यत्र छात्त्रमित्रः। मोक्षे स्मृतमक्षरमित्यमरः॥

वसेश्च॥ ७१॥

वसतेरपि सरन्॥ सः स्यार्धधातुके। पा० ७. ४. ४२.। इति तत्वम्। वत्सरो ऽब्दः॥

सम्पूर्वाच्चित्॥ ७२॥

वसतेः संपूर्वात्सरन् चित्स्यात्॥ संवत्सरो वत्सर एव। केचित्खञ्जना इव संवत्सरफलदर्शिन इति सुबन्धुः। सांवत्सरो गणकः। ऋगयनादित्वादत्राण्प्रत्ययः॥

कृधूमदिभ्यः कित्॥ ७३॥

डुकृञ् करणे। धूञ् कम्पने। मदी हर्षे॥ एभ्यः

सरन् कित्स्यात्। बाहुलकादत्व षत्वाभावः। कृसरः स्यात्तिलौदनम्। १६९.। इति हारवली॥ धूसर ईषत्पाण्डुरः। महिषधूसरितः सरितस्तट इति जानकीहरणे यमकम्॥ मत्सरः पिशुनः। मत्सरोऽन्यशुभद्वेषे तद्दत्कृपणयोस्त्रिष्विव्यमरः। अथ मत्सरः॥ असह्यपरसम्पत्तौ मात्सर्यं कृपणे क्रुधि। मत्सरा मक्षिकायाञ्च। रान्तम् १२३.। इति विश्वः। मत्सरा मक्षिका ज्ञेया भम्भराली च सा मतेत्यन्यः॥

पते रश्च लः॥ ७४॥

पततेः सरन्। तद्रेफस्य च लत्वम्। पत्सलः पन्थाः॥

तन्वृषिभ्यां कसरन्॥ ७५॥

तनु विस्तारे। ऋषी गतौ॥ आभ्यां क्सरन्॥ कित्त्वादनुनासिकलोपः। तसरः सूत्रवेष्टन इत्यमरः॥ ऋक्षर ऋत्विक्॥ कधूमदिभ्यः किदित्यत्र न ऋषि कृतं वैचित्र्यार्थम्॥

पीयुक्कणिभ्यां कालन् ह्रस्वः सम्प्रसारणञ्च॥ ७६॥

पीयुः सौत्रो धातुः। अण रण इति दण्डके कणि पठ्यते॥ आभ्यां कालन् यथाक्रमं ह्रस्वत्वं सम्प्रसारणञ्च। पियालो वृक्षभेदः स्यात्। मृगाः पियालद्रुममञ्जरीणां। कु॰स॰३,३१,। इति कालिदासः॥ कुणालो देशभेदः॥ बाहुलकाद्भजेरपि कालन्। न्यङ्क्वादित्वात्कुत्वम्। भगालं नरमस्तकम्। भगालं नरकपालम्। इनिना भगाली। चण्डीकान्तो भगाली च लेलिहानो वृषध्वज इति राजशेखरः।

कठिकषिभ्यां काकुः ॥ ७७ ॥

कठ कृच्छ्रजीवने । कष सिषेति दण्डकधातुः ॥ आभ्यां काकुः । कठाकुः पक्षी ॥ कषाकुरग्निसूर्ययोः ॥ कित्करणमुत्तरार्थम् ॥

सर्तेर्दुक्च ॥ ७८ ॥

सृ गतौ ॥ अतः काकुर्धातोर्दुगागमश्च । सृदाकुर्वातसरितोः ॥

वृतेर्वृद्धिश्च ॥ ७९ ॥

वर्ततेः काकुर्वृद्धिश्च धातोः ॥ वार्ताकुः प्रसिद्धैव । अर्धं सूपमुखस्य सूपगणिकावार्त्ताकुवार्त्ताकुत इति दारिद्र्यवर्णनम् । वार्त्ताकुरेषा गुणसम्प्रयुक्तेति द्रव्यगुणः । वार्तिङ्गणस्तु वार्त्ताकुरिति कोषः । बाहुलकादुकारस्यात्वेत्वे । वार्त्ताकवार्त्ताकौ । वार्त्ताकं पित्तलं किञ्चिदङ्गारपरिपाचितमिति वैद्यकशास्त्रम् । वार्त्ताको हिङ्गुली सिंहीत्यमरः ॥

पर्देर्नित्सम्प्रसारणमल्लोपश्च ॥ ८० ॥

पर्दतेः काकुः स च निद्भवति । धातो रेफस्य सम्प्रसारणमल्लोपश्च ॥ पृदाकुर्व्याघ्रसर्पयोः । पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे । कान्त १४५, । इति विश्वः ॥

सृयुवचिभ्यो ऽन्युजागूजक्नुचः ॥ ८१ ॥

सृ गतौ । यु मिश्रणे । वच परिभाषणे ॥ एभ्यो यथाक्रममन्युच् आगूच् अक्नुच् इति त्रयः प्रत्यया भवन्ति । सरण्युर्मेघवातयोः ॥ यवागूः प्रसिद्धैव ॥ वचक्नुर्विप्रवाग्मिनोः ॥

आनकः शीङ्भियः ॥ ८२ ॥

शेतेर्बिभेतेश्चानकः स्यात् ॥ शयानको ऽजगरः ॥ बिभेत्यस्मादिति भयानको भीष्मः ॥

आणको लूधूशिङ्घिधाञ्भ्यः ॥ ८३ ॥

लूञ् छेदने। धूञ्। शिङ्घि। धाञ्॥ एभ्य आणकः। लवाणकं दात्रम् ॥ धवाणको वातः ॥ शिङ्घाणकः श्लेष्मा। पृषोदरादित्वादत्र वा ककारलोपः। शिङ्घाणः फेनडिण्डीरौ नक्रेतश्च पिच्छिल इति विक्रमादित्यकोशः। शिङ्घाणं काचपात्रे स्याल्लोहनासिकयोर्मले। णान्ते ५५,। इति विश्वः। शिङ्घाणं नासिकामले। १९४,। इति हारावली ॥ धाणको दीनारभागः ॥

उल्मुकदर्विहोमिनः ॥ ८४ ॥

एते शब्दा मुकविमिन्प्रत्ययान्ता निपात्यन्ते ॥ उष दाहे उषः षकारस्य लत्वम्। उल्मुकं ज्वलदङ्गारम्। १४४,। इति हारावली ॥ दृणातेर्विः ॥ दर्विः परिवेषणभाण्डम्। दर्विः कोलादिविकृतिः। कृदिकारादिति ङीष्। दर्वीकरः सर्पः ॥ जुहोतेर्मिनिः। होमी यजमानः। होमशब्दादिनिना सिद्धावत्र पाठः प्रपञ्चार्थः ॥

ह्रियः कुक् रश्च लो वा ॥ ८५ ॥

ह्री लज्जायाम् ॥ अतः कुक् स्याद्रेफस्य च वा लत्वादेशः। ह्रीकुर्लज्जावान्। ह्लकुर्जंतुत्रपुणी लाक्षादिश्च ॥

हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् ॥ ८६ ॥

हसे हसने। मृङ् प्राणत्यागे। गॄ निगरणे। इण् गतौ। वा गतिगन्धनयोः। अम गत्यादिषु। दसु उपक्षये। लुञ् छेदने। पूङ् पवने॥ एभ्यो दशधातुभ्यस्तन् प्रत्ययो भवति। तितुत्रेत्यादिनेट्प्रतिषेधः। हस्तौ तु पाणिनक्षत्रे इत्यमरः। हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि। कचात्परः कलायार्थे सप्रकोष्ठतताङ्गुलौ। तान्ते २८,। इति विश्वः। नक्षत्रे स्त्रीलिङ्गो ऽपि हस्तशब्दः। हस्ता नक्षत्रम्। पुष्या हस्ता तथा ज्येष्ठेति ज्योतिषः। हस्तो नक्षत्रे पुंसि च। तथा च ज्योतिषवराहः। पुष्यो ऽथ हस्त श्रवणः श्रविष्ठेत्यादि॥ मर्तो भूलोकः। अत्र भवो दिगादेराकृतिगणत्वाद्यत्। मर्त्यः॥ गर्तो ऽवटः। गर्तस्त्रिगर्तदेशे स्यादवटे च कशुन्दरे। तान्ते २३,। इति विश्वः॥ एतः कर्बुरः। स्त्रियां वर्णवाचित्वात् ङीप्नत्वे। पा० ४,१,३९। एनी। एता॥ वातो वायुर्व्याधिश्च। पाशादित्वाद्यत्। वात्या। महावात्या प्रकुप्यतीति वराहः॥ अन्तो नाशसमीपयोः। अन्तः प्रान्ते ऽन्तिके नाशे स्वरूपे च मनोहरे। तान्ते ३१,। इति विश्वः। दिगादित्वादन्त्यम्॥ दन्तो दशनः वयसि दन्तस्य दतृ। पा० ५,४,१४१,। सुदती युवती। दन्तावलो हस्ती। दन्तुरः। उरच्॥ लोतः स्यादश्रुचिह्नयोः॥ पोतो बालवहित्रयोः॥ वलि लोपः। दीर्घः। धुर्तः शठः। धूर्तः स्यात्खण्डलवणे शठधत्तूरयोरपि। वि० तान्ते २२,॥ बाहुलकात्तुसेरपि तन्। तूर्णादिषु निपातनात्

दीर्घत्वम् । तूस्तं पापं जटा च । मुण्डमिश्रेति णिच् । तस्तानि विनिहन्ति वितूस्तयति पन्थानं वातः । तूस्तं धूलिरिति पुरुषोत्तमदेवः ॥ छो छेदने । छातो दुर्बलः ॥ म्लायतेरपि तन् । अभिपूर्वादभिम्लातः । नञ्समासे ऽनभिम्लातः । शिवादित्वादण् । आनभिम्लातः ॥

## नञ्याप इट्च ॥ ८७ ॥

आप्नोतेर्नञ्युपपदे तन्निडागमश्च । बाहुलकान्नञो नलोपाभावः । नापितः प्रसिद्ध एव । सेनान्तलक्षणकारिभ्यः, पा० ४,१,१५२, । इत्यपत्ये ण्यः । नापित्यः ॥

## तनिमृङ्भ्यां किच्च ॥ ८८ ॥

तनोतेर्म्रियतेश्च तन् प्रत्ययः कित्स्यात् । ततं वीणादिकं वाद्यम् । अम०१,१,७,४, । मृतं याचितमुच्यते । मृतं स्याद्याचिते मृत्यौ । तान्ते ४, । इति विश्वः । नञ्समासे ऽमृतं पीयूषम् ॥

## अञ्जिघृसिभ्यः क्तः ॥ ८९ ॥

अञ्जू व्यक्त्यादौ । घृ क्षरणदीप्त्योः । षिञ् बन्धने ॥ एभ्यः क्तः । अक्तं परिमितम् । अक्तं व्याप्ते च संकुल इति सः । व्यक्तं विस्पष्टम् ॥ घृतं सलिलसर्पिषोरित्यनेकार्थे ऽमरः । घृतमाज्ये प्रदीप्ते च सलिले च घृतं मतम् । वि० तान्त०२, । इति च । कारणे कार्योपचारादायुर्घृतम् । घृतं घृणा घर्म इति प्रयोगः । निगमविषयश्चायं धातुरिति तृज्वत् क्रोष्टुरित्यत्र भाष्यम् ॥ सितं शुक्लम् । सितं सितिम्ना सुतरां मुनेर्वपुः । १,

२५,। इति माघः॥ बाहुलकात् छुर्छेरपि क्तो धातोर्मुडागमः प्राक्। राल्लोपः। पा० ६,४,२१,। इति छकारलोपः। चकारस्य निवृत्तिः। मुहूर्त्तं पुन्नपुंसकम्॥ ऋट गतौ। ऋतं सत्यम्। नञ्समासे ऽनृतम्॥ वस निवासे। वस्तं भाग इत्यण्णगयनादिभ्यः। पा० ४,३,७२,। इत्यत्र न्यासः॥

दुतनिभ्यां दीर्घश्च॥ ९०॥

दु गतौ। तनु विस्तारे॥ आभ्यां क्तो धातोर्दीर्घश्च। दूतः प्रेष्यः। करोत्यभ्यधिकं कार्यं तमाहुर्दूतमुत्तमम्। ८, १२७,। इति भट्टिः। स्त्रियां दूती। दूतवणिग्भ्यां चेति यत्। दूत्यं तद्भावकर्मणीत्यमरः। ष्यञा दौत्यमिति पुरुषोत्तमदेवः। कः प्रयाति तु दौत्येनेति हितोपदेशः। लिङ्गविशिष्टपरिभाषया दूतीनां कर्म दौत्यम्॥ तातस्तु जनकः पितेत्यमरः। तातो ऽनुकम्प्ये जनके। तान्ते १३। इति विश्वः। बाहुलकात् शीङ् स्वप्ने। शीता हलपद्धती रामपत्नी च॥

जेर्मूट्चोदात्तः॥ ९१॥

जि जये॥ अतः क्तस्तस्य मूडागमश्च। तस्योदात्तत्वं धातोर्दीर्घश्च। जीमूतो मेघशैलयोरित्यमरः। जीवनं जलं मूत्रयति स्रवयतीति पृषोदरादित्वात्सिद्धेरनार्षमिदं सूत्रमिति पुरुषोत्तमदेवः॥

लोष्टपलितौ॥ ९२॥

एतौ क्तान्तौ निपात्येते। लुनातेः क्तः। तस्य षुडागमो

धातोर्गुणश्च । लोष्टं दलिः स्त्री लेष्टुर्ना स महान् दरणि-र्द्वयोरिति शब्दार्णवः । सर्वस्वे तु लोष्टतेरेव धातोर्लोष्ट-शब्दो व्युत्पादितः ॥ पलितं केशपाशः । पलितौषधमिव तमो वृद्धवेश्यानामिति तमोवर्णने सुबन्धुः । क्तविधौ पलि-ग्रहणेन सिद्धे प्रपञ्चार्थम् ॥

हृश्याभ्यामितन् ॥ ९३ ॥

हृञ् हरणे । श्यैङ् गतौ । आभ्यामितन् । हरित-श्येतौ वर्णभेदौ । वर्णादनुदात्तादित्वात् ङीष्नत्वे । स्त्रियां हरिणी हरिता । श्येनी श्येता ॥

रुहे रश्च लो वा ॥ ९४ ॥

रुह जन्मनि । अस्मादितन् रेफस्य च वा लत्वम् । रोहितो मृगमत्स्ययोरिति हारावली । लोहितोऽङ्गारकः । रोहितं रुधिरे प्रोक्तमृजुशक्रशरासने । रोहितो मीनमृग-योर्भेदे रोहितकद्रुमे । लोहितं कुङ्कुमे रक्ते गोशीर्षे रक्त-चन्दने । लोहितं स्यान्नदे भौमे वर्णभेदे च वाच्यवत् । तान्ते १०६ । इति विश्वः । ख्याते लोहितरक्ते कुङ्कुमे रोहिणी लोहिनी स्त्रि. रोहिता लोहिता ॥

पिशेः किच्च ॥ ९५ ॥

पिशतेरितन् स्यात्स च कित् । पिशितं मांसम् ।

श्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥ ९६ ॥

श्रु श्रवणे । दक्ष वृद्धौ । स्पृह ईप्सायाम् । गृह ग्रहणे चुरादावन्त्यौ ॥ एभ्य आय्यः स्यात् । श्रवाय्यो यज्ञपशुः ॥

दृच्छाय्यो गरुडो गृध्रश्च ॥ अयामन्तेति १५ णेरयादेशः। स्पृहयाय्यः स्पृहयालुर्नत्त्रं च। गृहयाय्यो गृहस्वामी ॥

दधिषाय्यः ॥ ९७ ॥

अयं शब्दो निपात्यते। दधिपूर्वात्स्यतेराय्यः षत्वं च। दधिषाय्यो घृतम् ॥

वृञ एण्यः ॥ ९८ ॥

वृञ् वरणे ॥ अस्मादेण्यः। वरेण्यः श्रेष्ठः। णोपदेश प्रयोजनं वरेण्यतेः क्विप् णिलोपाल्लोपयलोपा वरेण् इति णत्वश्रवणं यथा स्यात्। अन्यथा पदान्तस्येति प्रतिषेधात् णत्वं न स्यादिति पुरुषोत्तमदेवः। इह प्रावृष एण्यः। पा°४.३.१७। इत्यणो ऽपवादात् ज्ञापकादन्यतो ऽप्येण्यस्य सद्भावात् शुश्रूषेण्यो वरेण्य इत्यपि साधयन्ति केचिदित्यपि देववृत्तौ ॥

स्तुवः केय्यश्छन्दसि ॥ ९९ ॥

स्तौतेश्छन्दसि विषये केय्यः स्यात्। कित्त्वाद्गुणाभावे सत्युवङादेशः। स्तुवेय्यः स्यात्पुरन्दरः ॥

राजेरन्यः ॥ १०० ॥

राजतेरन्यः स्यात्। राजन्यो वह्निः। क्षत्रियजातौ तु राजश्वशुराद्यदिति यत्। राजन्ये ऽन्त्यस्वरितः ॥

शॄरम्योश्च ॥ १०१ ॥

शृणाति। रमयति ॥ आभ्यामन्यः। शरण्यं रमण्यमिति। देववृत्तौ सूत्रमिदं न दृश्यते ॥

अर्तेर्निच्च॥ १०२॥

ऋ गतौ॥ अतो ऽन्यः स च निद्भवति। अरण्यं विपिनम्। हिमारण्ययोर्महत्त्वे ङीषानुकौ। महारण्यमरण्यानीत्यमरः॥

पर्जन्यः॥ १०३॥

अयं शब्दो निपात्यते॥ पृषु सेचने। पर्षति वृष्टिं ददातीत्यन्यप्रत्ययः। षकारस्य चवर्गीयो जकारः। पर्जन्यः शक्रमेघयोः॥

वदेरान्यः॥ १०४॥

वदान्यस्त्यागिवाग्मिनोः। वादि.२७। इत्यजयकोशः। गतौ वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः। ५.२४। इति रघुः॥

अमिनक्षियजिवधिपतिभ्यो ऽत्रन्॥ १०५॥

अम गतौ। णक्ष गतौ। यज देवपूजादौ। वधिः प्रकृत्यन्तरम्। पत्लृ गतौ॥ एभ्यः पञ्चभ्यो ऽत्रन्। अमत्रं भाजनम्। नक्षत्रं तारका। नभ्राण्नपान्नवेदा इत्यपि। पा° ६.३.७५। व्युत्पत्त्यन्तरम्। यजत्रमग्निहोत्रि॥ वधत्रमायुधम्॥ पतत्रं वाहनम्। पतत्रं च तनूरुहमित्यमरः।

गडेरादेश्च कः॥ १०६॥

गड सेचने॥ अस्मादत्रन्। गकारस्य ककारः। कडत्रम्। डलयोरेकत्वस्मरणात्कलत्रं श्रोणिभार्ययोः। अम° ३ ४.१८०.।

वृञश्चित् ॥ १०७ ॥

वृञो ऽत्रन् चित् स्यात् । वरत्रा चर्मरज्जुः ॥

सुविदेः कत्रन् ॥ १०८ ॥

सुपूर्वाद्विदेः कत्रन् । सुविदत्रं कुटुम्बकम् ॥

कृतेर्नुम् च ॥ १०९ ॥

कृती छेदने ॥ अतः कत्रन् धातोर्नुमागमश्च । कृन्तत्रं लाङ्गलम् ॥

भृमृदृशियजिपर्वि पच्यमितमिनमिहर्यो ऽतच् ॥ ॥ ११० ॥

भृञ् भरणे । मृङ् प्राणत्यागे । दृशिर् प्रेक्षणे । यज देवपूजादौ ॥ पर्व पूरणे । डुपचष् पाके । अम गतौ । तमु कांक्षायाम् । णम प्रह्वत्वे शब्दे । हर्य क्लान्तौ गतौ च । एभ्यो दशधातुभ्यो ऽतच् स्यात् । भरतो राजभेदे स्यान्नटे । रामानुजे ऽपि च ॥ मरतो मृत्युः ॥ दर्शतः सोमसूर्ययोः ॥ यजत ऋत्विक् ॥ पर्वतो गिरिः । पर्व्वतस्येयमिति पार्वती दुर्गा । पर्वताच्च । पा० ४,२,१४३, । पर्वतीयः ॥ पचतो ऽग्निः ॥ अमतो रेणुः ॥ तमतस्तृष्णापरः ॥ नमतः प्रह्वः ॥ हर्यतो ऽश्वः ॥ बाहुलकान्मलतेरतच् । गौरादिनिपातना- दुपधाया दीर्घत्वम् । ङीष् । मालती । तथा च प्रयोगः । वर्णानाञ्च यथा विप्रस्तीर्थानां जाह्नवी यथा । सुराणाञ्च यथा विष्णुः पुष्पाणां मालती तथा ॥

पृषिरञ्जिभ्यां कित् ॥ १११ ॥

पृषु सेचने। रञ्ज रागे॥ आभ्यामतच् क्विद्भवति। पृषतो मृगो विन्दुश्च। पृषन्ति विन्दुपृषता इत्यमरः॥ रजतं रूप्यशुक्लयोरित्यनेकार्थतवर्गे ऽमरः॥

खलतिः॥ ११२॥

अयं शब्दो निपात्यते। खल सञ्चलने। अस्मादतच्। प्रत्ययान्तस्येत्वम्। धातुसकारलोपः। खलतिर्निष्केशशिराः। युवा खलतिः। पा० २,१,६७,। युवखलतिः॥

शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्यो ऽथः॥ ११३॥

शीङ्। शप। रु। गम। चञ्चु। जीव। अन प्राणने प्रपूर्वः॥ एभ्यः सप्तधातुभ्यो ऽथः स्यात्। शयथो ऽजगरः॥ शपथः प्रत्ययकरणम्॥ रवथः कोकिलः॥ गमथः पथिकः। वञ्चथो धूर्तः॥ जीवथ आयुष्मान्। प्राणथो बलवान्॥ अथप्रत्ययो ऽयमिति भाष्यम्। तदुक्तं। के पुनश्चङादयः। चङ्ङनजिङ्ङुनिबथङनङ इति॥

उपसर्गे वसेः॥ ११४॥

वसतेः सोपसर्गादथः। आवसथो गृहम्। आवसथे वक्रकवितानसिद्धाचार्यकोशः। सम्वसथो ग्रामः। बाहुलकात् हशमिदमिभ्यश्च। दरथो दिचु प्रसरणं गर्तश्च। शमथः शान्तिः। दमथो दान्तिः। शमथस्तु शमः शान्ति-र्दान्तिस्तु दमथो दम इत्यमरः।

भृञश्चित्॥ ११५॥

भृञो ऽथः स्यात्स च चित्। भरथो लोकपालः।

रुविदिभ्यां ङित् ॥ ११६ ॥

रौतेर्विदेश्चाथः स च ङिद्भवति । रुवथः श्वा । विदथो योगी ।

अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्यो ऽसच् ॥ ११७ ॥

एभ्यस्त्रयोदशधातुभ्यो ऽसच्प्रत्ययो भवति । अतसो वातः । गौरादित्वात् ङीष् । अतसी उमेति यस्याः प्रसिद्धिः । अवसो राजा । चमसः पिष्टवर्तिः स्यात् । २१५, । इति हारावली । गौरादित्वाच्चमसी । तमसो ध्वान्तम् ॥ नमसो ऽनुकूलम् । रभसो वेगहर्षयोः । तस्य भावो राभस्यम् । लभसो वाजिबन्धम् । नभस आकाशम् । तपसश्चन्द्रमा इति शब्दार्णवः । तपसस्तापसस्तप इति देवदत्तौ प्रमादः । पतसः पक्षी ॥ पनसः कण्टकिफलम् । महसं ज्ञानम् । बाहुलकादमेरप्यसच् । तस्य णित्वञ्च । धातोस्तुगागमश्च । णित्त्वाद्वृद्धिः । तामरसं पद्मम् । स्यतेर्धुक् । साध्वसं प्रतिभादयः । ककतेः कीकादेशश्च । कीकसमस्थि । तरतेस्तरसं मांसमिति त्रवर्गे ऽमरः ।

वेञस्तुट् च ॥ ११८ ॥

वेञ् तन्तुसन्ताने । अस्मादसच् तुडागमश्च । बाहुलकाद्त्वाभावः । वेतसो वृक्षभेदः स्यात् ।

वहियुभ्यां णित् ॥ ११९ ॥

वहतियौतिभ्यामसच् तस्य णित्वञ्च । वाहसो ऽजगरे ख्यातो यावसस्तृणसन्ततौ ।

वयश्च ॥ १२० ॥

वय गतौ । अतोऽसच् स्यात्स च णित् । वायसः काकः ।

दिवः कित् ॥ १२१ ॥

दीव्यतेरसच् कित् स्यात् । दिवसं पुंनपुंसकम् ।

कृशृशलिकलिगर्दिभ्यो ऽभच् ॥ १२२ ॥

कृ विक्षेपे । शृ हिंसायाम् । शल गतौ । कल गतौ । गर्द शब्दे । एभ्यः पञ्चभ्यो ऽभच् स्यात् । करभो मणिबन्धादिकनिष्ठान्ते तथोष्ट्रके । विश्व० भान्ते १० । शरभः पशुराजः । अष्टपादूर्ध्वनयन ऊर्ध्वपादचतुष्टयः । सिंहं हन्तुं समायाति शरभो वनगोचर इति महाभारते । शलभः पतङ्गः । कलभः करिशावकः । गर्दभः खरः ।

ऋषिवृषिभ्यां कित् ॥ १२३ ॥

ऋषी गतौ । वृषु सेचने ॥ अभ्यासभच् कित्स्यात् । ऋषभवृषभौ श्रेष्ठौ तथा गोपतिवाचिनौ । त्रिधा बद्धो वृषभो रोरवीति । ऋग्वे० . ४,५८,३, । त्रिषु स्थानेषु बद्धस्त्रिधा बद्धः कण्ठः उरसि शिरसि । वृषभो वर्षणादिति । रोरवीति शब्दं करोतीति भाष्यम् ॥

रुषेर्नित्लुष् च ॥ १२४ ॥

रुष हिंसार्थः । अस्मादभच् निद्भवति लुषादेशश्च धातोः। लुषभो मत्तदन्तिनि । किदित्यनुवृत्तेरगुणः ॥

रासिवल्लिभ्यां च ॥ १२५ ॥

रास शब्दे । वल्ल सम्वरणे ॥ आभ्यामभच् । रासभः खरः ॥ वल्लभो दयितः ॥

जृविशिभ्य झच् ॥ १२६ ॥

जृ वयोहानौ । विश प्रवेशने ॥ अभ्यां झच् । जरन्तो महिषः ॥ वेशन्तः पल्वलम् ॥ झलिङ्गे च बाहुलकाद्वदेः किंशब्दोपपदे झचि गौरादित्वात् ङीषि किम्वदन्ती जनश्रुतिरिति साधितम् ॥ अर्हतेरपि झच् । अर्हन्तः चपणको जिन इति विक्रमादित्यकोशः ॥

रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥ १२७ ॥

रुह । टुनदि । जीव । अनिः प्रपूर्वः ॥ एभ्य आशिषि झच् । स च षिद्भवति । रोहन्तो वृक्षभेदः ॥ नन्दन्तः पुत्रः ॥ जीवन्त ओषधम् ॥ प्राणन्तो वायुः ॥ षित्वात् स्त्रियां ङीष् । रोहन्तीत्यादिरूपचतुष्टयम् ॥

तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ॥ १२८ ॥

एभ्यो दशधातुभ्यो झजाशिषि विषये । स च षिद्भवति ॥ तरन्तः समुद्रः । तरन्ती नौका ॥ भवन्तः कालः ॥ वहन्तो वायुः ॥ वसन्त्यत्र मदनोत्सवा इति वसन्त ऋतुभेदः ॥ भासन्तः सूर्य्यः ॥ साधन्तो भिक्षुः ॥ गडिमण्डी ण्यन्तौ । तत्र गडेर्घटादित्वान्मित्त्वे मितां ह्रस्वः । अयामन्तेति णेरयादेशः । गडयन्तो जलदः । मण्डयन्तो भूषणम् ॥ जयन्तः शक्रपुत्रः स्यात् । स्त्रियां जयन्ती पुष्पभेदः । विजयन्तः शक्रः । तस्येदमित्यण् । वैजयन्तः शक्रप्रासादः । ङीप् । वैजयन्ती

पताका ॥ नन्दन्तो नन्दकः । अनाशिष्यपि यथा स्यादिति नन्देः पुनरुपादानम् ॥

हन्तेर्मुट् हि च ॥ १२९ ॥

हन्तेर्झच् । धातोर्हिंशब्दादेशः । प्रत्ययस्य मुडागमः ॥ हेमन्त ऋतुभेदः स्यात् । षिदित्यनुवृत्तेः स्त्रियां हेमन्ती । कथं हैमन्य ओषधयः । हेमन्तशब्दपर्य्यायो हेमन्शब्दो ऽपि विद्यत इति सर्वत्राण् च तलोपश्च । पा० ४,३,२२, । इत्यत्रोक्तम्॥

भन्देर्नलोपश्च ॥ १३० ॥

भदि कल्याणे । अतो झच् धातोर्नकारस्य च लोपः । भदन्तः प्रव्रजितः ॥

ऋच्छेररः ॥ १३१ ॥

ऋच्छ गतौ ॥ अस्मादरप्रत्ययः स्यात् । ऋच्छरा वेश्या । अरन्निति प्रमाद इति पारायणीयम् ॥ बाहुलकाद्वदेरप्यरः । वदरः ॥ कन्देर्नलोपश्च । कदरो विट्खदिरः । रलयोरैक्यात्कदलः । गौरादित्वात् स्त्रियां ङीष् । वदरी । कदरी । कदली ॥ मन्दरकन्दरशीकरकोटरशवरसमरवर्वरवर्करकर्परपिञ्जराम्बराडम्बरजर्जरवर्व्वरकर्करनखरतोमरप्रभृतयोऽपि बहुलवचनादेव साधनीयाः ॥

अर्त्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् ॥ १३२ ॥

एभ्यः षड्भ्यो धातुभ्यो ऽरप्रत्ययश्चित्स्यात् ॥ अररं कपाटम् ॥ कमरः कामुकः ॥ भ्रमरः षट्पदः । भ्रमरः कामुके

ऽपि स्यात्। २३४,। इति हारावली॥ चमरी मृगभेदो बालव्यञ्जनं च। बाहुलकात् दीर्घत्वं च। चामरं चमरे ऽपि चेति भागुरिः॥ देवरः पत्युः कनिष्ठभ्राता॥ वसतेर्वृन्तादरः। वासरं पुन्नपुंसकम्। वह्नौ वासरसङ्गे। १३,२,। इति भट्टिभाषासमावेशः॥

कुवः क्ररच्॥ १३३॥

कु शब्दे॥ अतः क्ररच्। कुररः पक्षिभेदः स्यात्। चक्रन्द शीता कुररीव भूयः। १४,६८,। इति शीताविलापे रघुः॥

अङ्गिमदिमन्दिभ्य आरन्॥ १३४॥

अगि गत्यर्थः। मदी हर्षे। मदि स्तुत्यादौ॥ एभ्य आरन्। अङ्गारं पुन्नपुंसकम्। अङ्गारो ऽलातभौमयोः। विश्वे रान्ते १८८,॥ मदारो वराहः॥ मन्दारः पारिजातकः। अम० २,४,२,६,। मन्देर्बहुलवचनादारुप्रत्ययो ऽपि भवति। पारिभद्रे तु मन्दारुर्मन्दारः पारिजातक इति शब्दार्णवः॥

गडेः कड् च॥ १३५॥

गडेरारन् कडादेशश्च धातोः। कडारः पिङ्गलः॥

शृङ्गारभृङ्गारौ॥ १३६॥

एतौ निपात्येते। शृ हिंसायाम्। डुभृञ्॥ आभ्यामारन् नुम् गुक् ह्रस्वश्च धातोर्यथाक्रमं। शृङ्गारो गजभूषायां रते नाट्यरसे ऽपि चेति शाश्वतः। पुंसः स्त्रियां स्त्रियाः पुंसि सम्भोगं प्रति या स्पृहा। स शृङ्गार इति ख्यातः क्रीडारत्या-

दिङ्गारक इति सुवर्णरेखः ॥ भृङ्गारः कनकालुका । अम० २,८,१,३२, । स्त्रियां भृङ्गारी प्रसिद्धैव । भृङ्गारी चीरीका चीरी किल्ली स्यात् किल्लिका स्त्रियाम् ॥

कञ्जिमृजिभ्यां चित् ॥ १३७ ॥

कजि सौत्रो धातुः । मृजूष् शुद्धौ ॥ आभ्यामारन् चित्स्यात् । कञ्जारो मयूरो व्यञ्जनं च । मृजेर्वृद्धिः । मार्जारो विडालः । स्त्रियां मार्जारी । मार्जारीव शुनीव गृहिणी बाचा किमन्यो जन इति दारिद्र्यवर्णनम् ॥

कमेः किदुच्चोपधायाः ॥ १३८ ॥

कमु कान्तौ । अस्मादारन् कित्स्यादुकारश्चोपधायाः । चिदित्यनुवृत्तेरन्तोदात्तत्वमिति न सु ने । पा० ८,२, ३, । इत्यत्र सूत्रे न्यासः । कुमारो युवराजे स्याच्छिशुषड्वर्षयोरपि ॥ कुमारश्च । पा० ६, २, २६, । इत्यत्र स्वरसूत्रे न्यासकृता कुमार क्रीड़न इत्यस्मात्पचाद्यचि कुमारशब्दो व्युत्पादितः । तदुपायान्तरं द्रष्टव्यम् ॥

तुषारादयश्च ॥ १३९ ॥

किदिति वर्तते । तुषारादयो निपात्यन्ते ॥ तुष तुष्टौ । आरन् । तुषारं हिमम् ॥ कास्ट शब्दकुत्सायाम् । कासारः सरः ॥ सहिः सहार आम्रभेदः ॥ कुपतर्कति चौरादिकत्वात्तर्कारः । ङीष् तर्कादित्वात्तर्कारी ॥

दीङो नुट् च ॥ १४० ॥

दीङ् क्षये ॥ अस्मादारन् प्रत्ययस्य नुड़ागमश्च ।

दीनारः सुवर्णाभरणम् । सूत्रमिदं सूतीवृत्तौ देववृत्तौ च न दृश्यते ॥

सर्तेरपः षुक् च ॥ १४१ ॥

सृ गतौ ॥ अस्मादपः स्यात् षुगागमश्च धातोः । सर्षपो व्रीहिभेदः स्यात् । पृषोदरादित्वादिकारसहितो ऽपि रेफः साधुः । सरिषपः कटुस्नेहः कदम्बः सर्षपो ऽपि चेति चन्द्रव्याख्यानम् ॥

उषिकुटिदलिकचिखजिभ्यः कपन् ॥ १४२ ॥

उष दाहे । कुट कौटिल्ये । दल विदारणे । कच बन्धने । खज मन्थे ॥ एभ्यः पञ्चभ्यः कपन् । उषपो वह्नि-सूर्य्ययोः ॥ कुटपो मानभाण्डम् ॥ दलपः प्रहरणम् ॥ कचपं शाकपात्रम् ॥ खजपं घृतम् ॥

क्वणेः सम्प्रसारणं च ॥ १४३ ॥

क्वण शब्दार्थः ॥ अतः कपन् धातुवकारस्य सम्प्रसारणं च । कुणपं मृतभेदः स्यात् । कुणपं स्यादतीव्यर्थे शेष इत्य-नन सूत्रे णाणि कृते कौणपो राक्षसः ख्यातः ॥

कपश्चाक्रवर्मणस्य ॥ १४४ ॥

क्वणतेरेव चाक्रवर्मणस्याचार्यस्य मतेन कपप्रत्ययः सम्प्रसारणं च । कुणपः स एव । स्वरे तु विशेषः ॥

विटपपिष्टपविशिपोलपाः ॥ १४५ ॥

चत्वारो ऽमी कपप्रत्ययान्ता निपात्यन्ते ॥ विट शब्दे । विटपो लतादिपर्णसञ्चयः । विटपो ऽस्त्रियां स्तम्बे ऽपी

त्वमरः ॥ विशतेरेवादेः पत्वम् । प्रत्ययस्य तुट् । षत्वादिकार्यम् । पिष्टपं भुवनम् । त्रिपिष्टपः स्वर्गः ॥ विशतेरेव प्रत्ययादेरित्वम् । विशिपं मन्दिरम् ॥ वलतेः सम्प्रसारणम् । उलपं कोमलं तृणम् ॥ मण्डपशब्दस्यात्र प्रमादजः पाठः । मडि भूषायाम् । मण्डः । तं पिबति । मण्डप इत्युपाध्यायसर्वस्वे व्युत्पादितत्वात् ॥

वृतेस्तिकन् ॥ १४६ ॥

वृतु वर्तने ॥ अस्मात्तिकन् । वर्त्तिका पक्षिभेदे स्यात् । श्येनो वर्त्तिकामुल्लापयते ॥ वर्तका शकुनौ प्राचाम् । पा० ७,३,४५,९, । इत्यकारस्येत्वे ऽविधेये वार्त्तिकारंभादृतेपर्वुल् वर्तिकेति च व्याख्यातत्वादस्यानार्षता लक्ष्यते ॥

कृतिभिदिलतिभ्यः कित् ॥ १४७ ॥

कृती छेदने । भिदिर विदारणे । लत सौत्रः ॥ एभ्यस्तिकन् कित्स्यात् । कृत्तिका नक्षत्रम् । स्त्रीभ्यो ढक् । पा० ४,१,१२०, । कार्त्तिकेयः ॥ भित्तिका भित्तिरेव ॥ लत्तिका गोधा । अवपूर्वादवलत्तिका ॥

इष्यशिभ्यां तकन् ॥ १४८ ॥

इषु इच्छायाम् । अशू व्याप्तौ ॥ आभ्यां तकन् कित्स्यात् ॥ मृदस्तिकन् । पा० ५,४,३९, । इति ज्ञापकादनित्यत्वेन प्रत्ययस्यात्कात् । पा० ७, ३, ४४, । इतीत्वं न भवति इष्टका तु प्रसिद्धैव । इष्टकेषीकामालेत्यादिना पूर्वपदह्रस्वत्व इष्टकचितम् । पक्वेष्टकचितम् ॥ अष्टका पितृदेवत्ये सा

च वैदिककर्मविशेषः । व्रीह्यादित्वादिनिः । अष्टकी ॥ बाहुलकान्मस्यतेरपि तकन् । मस्तकं न स्त्रियां शीर्षे ॥ डुधाञ् । धातकम् । गौरादित्वात् ङीष् । धातकी धातुपुष्पिका । अम० २,४,४,१२, ॥

इणस्तशन्तशसुनौ ॥ १४९ ॥

इणो धातोस्तशन्तशसुनौ प्रत्ययौ भवतः । नकारः स्वरार्थः । उकार उच्चारणार्थः ॥ एतशो ब्राह्मणः ॥ अत्वसन्तस्येति । पा० ६,४,१४, । दीर्घः । एतशाः स एव । एतशसौ ॥ एतशसः ॥

वीपतिभ्यां तनन् ॥ १५० ॥

वी गत्यादिषु । पत्लृ गतौ ॥ आभ्यां तनन् । वेतनं भृतिः । वेतनादिभ्यो जीवतीति ठक् । वैतनिकः कर्मकरः ॥ पत्तनं पुटभेदनम् । अम० २,२,१, ॥

दृदलिभ्यां भः ॥ १५१ ॥

दॄ विदारणे । दल विकशने ॥ आभ्यां भः । दर्भः कुशः ॥ दल्भः स्यादृषिचक्रयोः ॥

अर्तिगॄभ्यां भन् ॥ १५२ ॥

ऋ गतौ । गॄ निगरणे ॥ आभ्यां भन् । इयर्तीत्यर्भः शिशुः संज्ञायां कन् । अर्भकः स एव ॥ गर्भो जठरतत्स्थयोः । गर्भादप्राणिनीति तारकादित्वादितच् । गर्भिताः शालयः । प्राणिनि तु गर्भिणी ॥

इणः कित् ॥ १५३ ॥

एतेभन् किद्भवति ॥ इभो हस्ती । इच्छादित्वाद्यः । इभ्य ईश्वरः ॥

असि सञ्जिभ्यां क्थिन् ॥ १४५ ॥

असु क्षेपणे । षञ्ज सङ्गे ॥ आभ्यां क्थिन् । अस्थि कीकसम् । अस्थिनी । अस्थीनि ॥ कित्वान्नलोपः । सक्थि ऊरुदेशः कीकसं च । सक्थि क्लीबे पुमानूरुरित्यमरः । सक्थिनी । सक्थीनि ॥

प्लुषिकुषिशुषिभ्यः क्सिः ॥ १५५ ॥

प्लुष दाहे । कुष निष्कर्षे । शुष शोषणे ॥ एभ्यः क्सिः । प्लुक्षिर्वह्निः ॥ कुक्षिर्जठरम् ॥ शुक्षिर्वातः । भवार्थे दृतिकुक्षीति । पा० ४,३,५६, । ढञ् । कौक्षेयमसिमुद्यम्य चकारापनसं मुखम् । ४.२१,। इति भट्टिः ॥

अशेर्नित् ॥ १५६ ॥

अशू व्याप्तौ ॥ अतः क्सिर्निद्भवति । अक्षि नयनम् । अक्षिणी । अक्षीणि । अक्ष्णा काणः । पा०२,१,३०, । अव्ययीभावे शरत्प्रभृतिभ्यः । पा०५,४,१०७, । इत्यत्र सूत्रे प्रतिपरसमनुभ्यो ऽक्ष्ण इति वार्त्तिकेन टच्समासान्तः । प्रत्यक्षम् । परोक्षम् । समक्षम् । अन्वक्षम् । परोक्षमित्यत्र तु परोक्षे लिट् । पा०३,२,११५,। इति निपातनादुत्वम् । पञ्चमीतत्पुरुषो ऽत्रम् ॥

इषेः क्सुः ॥ १५७ ॥

इच्छतेः क्सुप्रत्ययः स्यात् ॥ इक्षुर्मधुतृणं स्मृतमित्युत्पलिनी ॥

अवितृस्तृतन्त्रिभ्य ईः ॥ १५८ ॥

अव रक्ष पालने । तॄ प्लवने । स्तृञ् आच्छादने । तन्त्रि कुटुम्बभरणे । चुरादिर्णन्तः ॥ एभ्य ईप्रत्ययः । अवी नारी रजस्वला ॥ तरीर्नावि च भाण्डे च वस्त्रादिस्थितिहेतुके ॥ स्तरीर्धूमः ॥ णिलोपः । तन्त्रीर्वीणादेर्गुणः ॥

यापोः किद् द्वे च ॥ १५९ ॥

या प्रापणे । पा पाने ॥ आभ्यामीः कित्स्यात् द्वित्वं च धातोः । ययीरश्वः ॥ पपीः स्यात्सोमसूर्ययोः । ययीपप्यावुभौ पुंसीत्युज्ज्वलदत्तः । शसि । ययीन् । पपीन् । ङौ । ययी । पपी ॥

लक्षेर्मुट् च ॥ १६० ॥

लक्ष दर्शनाङ्कनयोः । चुरादिर्णन्तः ॥ अस्मादीप्रत्ययः । अस्य मुडागमः । णिलोपः । लक्ष्मीः पद्मा विभूतिश्च । कृदिकारादिति ङीषि लक्ष्मीत्यपि भवतीति दुर्घटे रक्षितः । लक्ष्मा अर्चेति पामादिराठात् नप्रत्ययो ऽकारान्तादेशश्च । लक्ष्मणः सुमित्रापुत्रो लक्ष्मणा सारसप्रिया ॥

इति महोपाध्यायजाजलीत्यपरनामधेयश्रीमदुज्ज्वलदत्तविरचितायामुणादिवृत्तौ तृतीयः पादः ॥ ३ ॥

---

वातप्रमीः ॥ १ ॥

अयं शब्दो निपात्यते। वातशब्द उपपदे माङ् मान इत्यस्माद्धातोरीप्रत्ययः। स च किदित्यनुवृत्तेः किद्भवति। आतो लोपः। वातवत् प्रमाति प्रक्षिपतीति। वातप्रमी-र्वातमृग इत्यमरः। वातमृगसाहचर्य्यान्नपुंस्त्वमस्येति केचित् शसि वातप्रमीन्। ङौ तु वातप्रमी। अमि वातप्रमीं। योषिति वातप्रमीः समीरमृग इति गोपालितो वात-पालितः। तदा तु शसि वातप्रमीरिति ङौ च नदी-सञ्ज्ञायां वातप्रम्यामिति। कृदिकारादिति ङीषि वात-प्रमीति सुलोपो ऽपि भवतीति दुर्घटे रक्षितः। वातप्रमीः स्त्रीपुंसयोरिति सुभूतिचन्द्रः। द्विचतुःषट् पदोरगाः। अम॰ २,६,३७। इति पुंस्त्वमस्य। चान्द्रलिङ्गानुशासने ऽप्येतदेव व्यवस्थितमिति॥ वश कान्तौ। बाहुलकादतो ऽपीप्रत्ययो भवति संप्रसारणं च। उशीववाञ्छा। तत्कुशला नरा अस्मिन्नित्युशीनरो जनपद इति सर्व्वत्रे व्यत्यादितम्॥

ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः क-त्निज्यतुजलिजिष्णुजिष्ठजिसन्स्यनिथिनुल्यसासानु-कः ॥२॥

ऋ गतौ। तनु विस्तारे। अन्जू व्यक्तादौ। वनु याचने। अन्जू स एव। ऋ गतौ ण्यन्तः। मदी हर्षे अत सातत्यगमने। अगि गत्यर्थः। कु शब्दे। यु मिश्रणे। क्षश तनूकरणे। एभ्यो द्वादशधातुभ्यः कलिच् यतुच् अलिच् इष्णुच् इष्ठच् इसन् स्यन् इथिन् उलि अस आस आनुक् इत्येते द्वादश प्रत्यया भवन्ति यथा संख्यम्। कलीति ककारः कित्कार्य्यार्थः। धातोर्यणादेशः। बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः। तन्यतुर्वायू रात्रिश्च। अञ्जलिः। तौ युतावञ्जलिः पुमानित्यमरः॥ वनिष्णुरपानं। अञ्जिष्ठो भानुः। केचिदञ्जतेरिष्णुच् प्रत्ययमिच्छन्ति॥ तेषामञ्जिष्णुरित्युदाहरणम्। अर्त्तिह्री-त्यादिनापुक्। अर्पिसो ऽग्रमांसम्। मत्स्यो मीनः। अतिथिर्ना गृहागते। अमं २,७,२३। अतिथी च स्त्रियामित्याहुः। बाहुलकादतो लोपे तिथिरित्यपि भवतीति वर्णविवेकः। अङ्गुलिः करशाखा। रलयोरेकत्वस्मरणात् कृदिति च ङीष् अङ्गुरीवोरगच्छता। अङ्गुलिशब्दस्यार्थे ऽङ्गुलशब्दो ऽस्ति। तेन भूमेरप्यर्धमङ्गुलमिति सिध्यतीति तत्पुरुषस्याङ्गुलेः। पां ५.४.८६। इत्यच रचितः॥ कवसः संनाहः कण्टकजातिश्च। केचिदचप्रत्ययमिच्छन्ति। कवचं वर्म। यवासो दुरालभा॥ क्षशानुरग्निः॥

शः करन्॥ ३॥

शृ हिंसायाम्। अतः करन्। उत्तरसूत्रे किद्ग्रहणात्-ककारस्यात्र नेत्संज्ञा। शर्करा खण्डविकृतिर्मृद्विकारेऽपि वर्त्तते। चूर्णखण्डे स्यात्। २०८। इति हारावली॥

पुषः कित्॥ ४॥

पुष्यतेः करन् स च कित्। पुष्करम् गगनपद्मवारिषु। पुष्करादिभ्यो देश इतीनिः। पुष्करिणी प्रसिद्धैव॥

कलंश्च॥ ५॥

पुष्यतेः कलन् कित्स्यात्। पुष्कलम् प्रत्यग्रम्॥

गमेरिनिः॥ ६॥

गच्छतेरिनिः। स च भविष्यति गम्यादयः। पां३,३,३। इति भविष्यदर्थे। गमिष्यतीति गमी पथिकः॥

आङि णित्॥ ७॥

गच्छतेरेवाङ्पूर्वादिनिः। स च णिद्भवति। णित्त्वाद्वृद्धिः आगमिष्यतीत्यागामी॥

भुवश्च॥ ८॥

भवतेरिनिः। स च णिद्भवति। भविष्यतीति भावी॥

प्रे स्थः॥ ९॥

तिष्ठतेः प्रपूर्वादिनिर्णिच्च सः। णित्त्वादातो युक्। प्रस्थायी गन्तुमनाः॥

परमे कित्॥ १०॥

तिष्ठतेः परमशब्द उपपद इनिः कित्स्यात्। हलद-

न्तात्। पा०६,३,९,। इत्यलुक्। स्थास्थिन्निति षत्वम्। परमेष्ठी पितामहः॥

मन्थः॥ ११॥

मन्थ विलोडने। अत इनिः क्तित्स्यात्। मथिन्। पथिमथ्यृभुक्षामात् इतो ऽत्सर्वनामस्थाने। पा०७,१,८५,-८६। इत्येते विधयो यथाक्रमम्। मन्थाः। मन्थानौ। मन्थानः। मन्था मन्थनदण्डे च वज्रे वाते ऽपि च स्मृतः॥

पतस्थ च॥ १२॥

पत्लृ गतौ॥ अस्मादिनिस्थश्चान्तादेशः। पूर्ववदात्वादिकम्। पन्थाः। पन्थानौ। पन्थानः। अपन्थानम् तु गच्छन्तं सोदरो ऽपि विमुञ्चति। पथतेः पचाद्यचि पथः। पथौ। पथाः। अदन्तः पथशब्दो भारते पुंलिङ्गे दृश्यते। वाटः पथश्च मार्गश्चेति सुभूतिचन्द्रः॥ इह ऋभवः क्षियन्ति वसन्त्यस्मिन्नित्यन्येभ्यो ऽपि दृश्यते। पा०३,२,१०१,१। इति डः। ऋभुक्षः स्वर्गः। सो ऽस्यास्तीतीनिः। सिद्धऋभुक्षिन्निति। अत्रापि पूर्ववदात्वादिकम्। ऋभुक्षाः। ऋभुक्षाणौ। ऋभुक्षाणः॥

खजेराकः॥ १३॥

खज मन्थे। अस्मादाकप्रत्ययः। खजाकः पक्षिविख्यातः खजाका दर्विरुच्यते। बाहुलकान्मन्देरप्याकप्रत्ययः। मन्दाकानि स्रोतांसि। तान्यस्याः सन्ति। मन्दाकिनी

वियद्गङ्गेति पारायणम् । मन्दमकितुं गन्तुं शीलमस्या इति मन्दाकिनीत्यपि व्युत्पत्त्यन्तरम् ॥

वलाकादयश्च ॥ १४ ॥

आकप्रत्ययान्ता निपात्यन्ते । वल सम्वरणे । वलाका बकपंक्तिः स्याद्वलाका विसकण्ठिका । वलाकाम् कामुकी-माहुर्वलाकश्च वको मत इति शाश्वतः ॥ मन ज्ञाने । मनाका हस्तिनी । पूञ् पवने । पवाका वात्या ॥ शलाकाञ्जनयष्टिका ॥ पटाकः पक्षी ॥ पिटतेर्गुणाभावः । शिवादित्वादण् । पैटाकः पक्षी । पताका वैजयन्ती ।

पिनाकादयश्च ॥ १५ ॥

आकप्रत्ययान्ता निपात्यन्ते । पा रक्षणे । धातोरित्वम् नुम् च । पातीति पिनाकः । क्लीवपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोरित्यनेकार्थे ऽमरः ॥ तड आघाते । तडाका प्रभा । भदि कल्याणे । नलोपः । भदाकः कल्याणम् । श्यैङ् गतौ । मुगागमश्च । श्यामाकः ॥ भा दीप्तौ नञ् पूर्वः । नभाकं नभः ॥ पिष्लृ सञ्चूर्णने । षकारस्य णत्वम् । धातोर्यगागमः । पिण्याकस्तिलकल्कः ॥ तथा वृतेर्वृद्धिश्च । वार्ताकः । गौरादित्वाद्वार्ताकीति वर्ण-विवेकः ॥ गुवतेः कुटादित्वाद्गुणाभावः । उवङ् । गुवाक इति धातुप्रदीपटीका ।

कषिदूषिभ्यामीकन् ॥ १६ ॥

कष सिषेति दण्डकः । दुष वैकृते ण्यन्तः ॥ आभ्या-

मीकन्। कषीका पक्षिजातिः॥ दूषीका नेत्रयोर्मलम्। दोषो णौ। पां ६, ४, ९०,। इत्यूत्वम्। दूषिकापटलरुद्धलोचनेति गोपदन्तः। दूषयतेश्च इरितीप्रत्ययः। दूषिः। कृदिति ङीष्। ततः स्वार्थे कः। पिचण्डी दूषिका दूषी पिचोण्डम् तु दृग्मोर्मलमिति विक्रमादित्यकोशः॥

अनिहृषिभ्यां किच्च॥१७॥

अन प्राणने। हृष तुष्टौ॥ अभ्यामीकन् कित्स्यात्। अनीकमस्त्रियाम् सैन्ये॥ हृषीकं विषयीन्द्रियम्। अमं १,१,४, १७,। तदीश्वरो हृषीकेशो विष्णुः॥

चङ्कणः कङ्कण च॥१८॥

कण शब्दार्थः॥ अस्माद्यङ्लुगन्तादीकन् धातोः कङ्कणादेशश्च। घण्टिकायाम् कङ्कणीका सैव प्रतिसरापि च। किङ्किणी क्षुद्रघण्टिकेति शब्दान्तरम्। उत्तालः किङ्किणीनामिति भवभूतिः॥

शृपृवृञां द्वे रुक्चाभ्यासस्य॥१९॥

शॄ पॄ वृञ्॥ एभ्य ईकन्। एषां द्विर्वचनमभ्यासस्य रुगागमश्च। शर्शरीको हिंस्रः॥ पर्परीको दिवाकरः॥ वर्वरीकः कुटिलकेशः॥

फर्फरीकादयश्च॥२०॥

ईकनन्ता अमी निपात्यन्ते॥ स्फुर स्फुरणे। अस्मादीकन् धातोः फर्फरादेशश्च। फर्फरीकं किशलयम्॥ दर्दरीकं वादित्रम्॥ कर्करीकं शरीरम्॥ तिमेर्मकारस्य उकारो

ऽभ्यासस्य नुट् च । तिन्तिडीको वृक्षजातिः । तेन संस्कृतमिति वर्तते । कोपधादण् । पां ४,४,३—४, । तैन्तिडीकम् । तथा चन्द्रः । सिद्धान्नं ग्रहणी पुष्यं किङ्किणीतिन्तिडीकयोः । एवं तिन्तिडाशब्दो ऽमरे न सङ्गच्छते । उपदंशस्तृतीयायाम् । पां ३,४,४७, । इति तिन्तिड्योपदंशं भुंक्त इति भाष्यप्रयोगात् । तिन्तिडीत्यपि शब्दान्तरमिति गोवर्धनः ॥ चरेर्नुम् । चञ्चरीको भ्रमरः ॥ मृङ् प्राणत्यागे । मर्मरीको हीनजनः ॥ डुकृञ् कर्करीका गलन्तिका ॥ पुणतेः पुण्डरीकं सिताम्भोजे सितपत्रे च भेषजे, व्याघ्रो ऽपि पुण्डरीको ऽग्निदिग्गज इति शाश्वतः ॥

ईषेः किद्ध्रस्वश्च ॥ २१ ॥

ईष गतौ ॥ अस्मादीकन् ह्रस्वश्च । कित्त्वाद्गुणाभावः इषीका शरशलाका वीरणकाष्ठिका च । इष्टकेषीति पूर्वपदह्रस्वत्वं च । इषीकतूलम् । तस्मिन्नास्थदिषीकास्त्रं रामो रामावबोधितः । १२, २३, , इति रघुः ॥

ऋजेश्च ॥ २२ ॥

ऋज गतौ ॥ अस्मादीकन् कित्स्यात् । ऋजीक उपहतः ॥

सर्तेर्नुक् च ॥ २३ ॥

अत ईकन् कित्स्यात् नुगागमश्च । सृणीका लाला ॥

मृडः कीकच्कंकणौ ॥ २४ ॥

मृड सुखने ॥ अतः कीकन्कङ्कणौ प्रत्ययौ । मृडीको मृडः । मृडकणः शिशुः ॥ बाहुलकात्कायतेरपि कङ्कणप्रत्ययः ।

कायतीति कङ्कणः करभूषणम् । अम० २,६,२,८, । इति ॥

अलीकादयश्च ॥ २५ ॥

कीकनन्ता अमी निपात्यन्ते ॥ अल भूषणादौ । अलीकं मिथ्या । विपूर्व्वात् व्यलीकं विप्रियं खेदश्च ॥ वल सम्वरणे । वलीकं पटलप्रान्ते ॥ वलतेर्मुगागमश्च । वल्मीकं पुन्नपुंसकम् ॥ वहतेर्वृद्धिश्च । वाहीको गौर्वाहश्च । सुप्रपूर्वादिणस्तुट् च । सुप्रतीको ऽग्निदिग्गजे ॥ एवमन्ये ऽपि ॥

कृतॄभ्यामीषन् ॥ २६ ॥

कॄ विक्षेपे । तॄ तरणे ॥ आभ्यामीषन् । करीषो ऽस्त्री शुष्कगोमये तरीषो नौः ॥

शॄपॄभ्यां किच्च ॥ २७ ॥

आभ्यामीषन् कित्स्यात् ॥ इत्त्वरपरत्वे । शिरीषो वृक्षभेदः स्यात् । शिरीषपुष्पाधिकसौकुमार्य्यौ । १,४१, । इति कुमारः ॥ पुरीषं शकृत् । गवाश्वप्रभृतित्वान्नपुरीषम् ॥

अर्जेर्ऋजश्च ॥ २८ ॥

अर्ज षर्ज अर्जने ॥ अत ईषन् स्यात्स च कित् ऋजादेशश्च धातोः । अर्ज्यते रसो ऽस्मादित्यृजीषं पिष्टपचनमित्यमरः ॥

अम्बरीषः ॥ २९ ॥

अयं शब्दो निपात्यते । अवि शब्दे ॥ अस्मादीषन् । तस्याकरुडागमः । अम्बरीषमाकाशं खेदनी च । अम्बरीषमिवाभाति सुखं ते मरुतात्मज । अम्बरीषः पुमान् भ्राष्ट्रमिति गोपालितः । क्लीवे ऽम्बरीषं भ्राष्ट्रो नेत्यमरः ॥

कृशृपृकटिपटिशौटिभ्य ईरन् ॥३०॥

एभ्यः षड्भ्य ईरन् स्यात्॥ करीरो वृक्षभेदो वंशाङ्कुरश्च॥ शीर्यत इति शरीरं प्राणिकायः॥ पूर्यते ऽनेनेति परीरं फलम्॥ कटीरः कन्दरो जघनदेशश्च॥ पटीरः कन्दुकः कासः पटीरश्चन्दनद्रुमः॥ शौटीरस्त्यागिवीरयोः। ब्राह्मणादित्वात् शौटीर्यम्॥ हिडि गत्यनादरयोः। बाहुलकादतो ऽपि च। हिंसत इतस्ततो गच्छतीति हिण्डीरो ऽब्धिकफः फेन इत्यमरः। दाडिमे ऽपि च हिण्डीरम्। २७०, । इति हारावली॥ रूपरत्नाकर उपाध्यायसर्वस्वे च हिण्डिरादेश्च ड इत्यभिप्राय डिण्डीर इत्यपि साधितम्। तच्चिन्त्यम्॥ किर्मीरतूणीरजम्बीर कुम्भीरकुटीरादायो ऽपि बाहुलकादेव बोद्धव्याः॥

वशः कित्॥ ३१॥

वश कान्तौ॥ अस्मादीरन् कित्स्यात्। सम्प्रसारणादिकार्यम्। उशीरं वीरणमूलं न स्त्री॥

कशेर्मुट् च। ३२।

कश इति सौत्रो धातुः॥ अस्मादीरन् तस्य मुडागमश्च। कश्मीरो देशभेदः। काश्मीरशब्दो गन्तव्यपरत्वं वाणिजे। पां ६,२,१३,। इत्यत्र स्वरसूत्रे पृषोदरादित्वात्साधितः सर्वस्वे त्वत्रैव सूत्रे। तत्पचान्तरं द्रष्टव्यम्।

कृञ उच्च॥ ३३॥

करोतेरीरन् कित्स्यात् रकारस्योकारश्च। कुरीरं मैथुनम्।

कपिलिकादित्वाल्लत्वे कुलीरः कर्कटः ॥

**घसेः किच्च ॥ ३४ ॥**

घसेरीरन् कित्स्यात् । उपधालोपे कत्वम् षत्वम् च । क्षीरं पयः । क्षीरिणो वृक्षाः ।

**गभीरगम्भीरौ ॥ ३५ ॥**

एतौ निपात्येते । गच्छतेर्भकारान्तादेशः । पक्षे नुमागमश्च । गभीरम् गम्भीरमगाधो गहनं च । कुर्वन्त्येव हि तूष्णीकां राजन् गम्भीरवेपसः । लघवो घोषयन्त्येव न तु कुर्वन्ति किंच नेति भागवृत्तिः । भवार्थे गम्भीरात् ञ्यः । पां ४,३,५८, । गाम्भीर्यम् ।

**विषा विहा ॥ ३६ ॥**

इमौ निपात्येते । षो ऽन्तकर्मणि । ओहाक् त्यागे । आभ्याम् विपूर्वाभ्यामाप्रत्ययः । विषा बुद्धिः । विहा स्वर्गः । स्वभावादनयोरव्ययत्वम् ।

**पच एलिमच् ॥ ३७ ॥**

पचेरेलिमच्प्रत्ययः । पचेलिमो वह्निरर्कश्च ।

**शीङो धुग्लग्वलञ्वालनः ॥ ३८ ॥**

शीङ् स्वप्ने । अतश्चत्वारः प्रत्यया भवन्ति । शीधु मद्यम् । शीलं स्वभावः । शैवलम् जलनीली । शैवालम्, सैवालमपि । बाहुलकादिकारस्य एकारः । शेपालम् शैवलो न स्त्री शैवालो जलनीलिकेति शब्दार्णवः । शैवलसुपरीत्यर्थान्तरे । पां ५,२,८४, ।

मृकणिभ्यामूकोकणौ ॥ ३९ ॥

मृङ् प्राणत्यागे । कण शब्दार्थः । आभ्यां यथाक्रम-मूकोकणौ । मरूकोमृगः । काणूकः काकः ।

वलेरूकः ॥ ४० ॥

वल सम्वरणे । अस्मादूकः । वलूकः पद्मोत्पलमूलं च ।

उलूकादयश्च ॥ ४१ ॥

एते निपात्यन्ते ॥ वलेः संप्रसारणम् । उलूकः । उलूका-विन्द्रपेचकौ । सर्वस्वे तु ऊर्ध्वौ कर्णावस्येति पृषोदरादित्वात् दीर्घादिकमप्यूलूक इति साधितम् । वदेर्यङ्लुगन्तादूकः । वावदूकश्च वक्तरीति भागवृत्तिः । सर्वस्वे तु यजजपदशाम् । पा० ३,२,१६६ । इति बहुलवचनादन्यतोऽपि भवत्यूक-प्रत्यय इति कृत्वा वावदूक इति साधितम् ॥ शमेरूको बुगा-गमश्च । शम्बूको जलशुक्तिरसुरविशेषश्च । बाहुलकादूक-प्रत्ययो बुगागमश्च । शम्बुकः शम्बूको ज्ञेयः पूर्वः कान्तस्तु सर्वदा । ककारेण विना शेषो दृश्यते ग्रन्थविस्तर इति शब्दा-र्णवः ॥ भल्ल परिभाषणे । भल्लूक ऋक्षः । पृषोदरादित्वा-द्भल्लुक इत्यपि । तथा भलत्तेरूको वृद्धिश्च धातोः । भालूक इति शब्दार्णवः ॥ महेर्हकारस्य धकारः । मधूको वृक्षभेदः स्यात् ॥ तथा जम्बूकबन्धूकवास्तूकएलूकादयो ऽप्यत्रैव द्रष्टव्याः ॥

शलिमण्डिभ्यामूकण् ॥ ४२ ॥

आभ्यामूकण् स्यात् । णित्त्वाद्वृद्धिः ॥ शालूकम् मूल-

द्रव्यम् ॥ मण्डति वर्षासमयमिति मण्डूको भेकः । पात्रे-समितादित्वात्कूपमण्डूकः ॥

निया मिः ॥ ४३ ॥

नयतेर्मिः स्यात् ॥ नयति चक्रमिति नेमिश्चक्रावयवः । नेमिः पृथिवी समुद्रनेमिं पितुराज्ञयेति ॥ या प्रापणे। बाहुलकादतो ऽपि मिः । यामिः स्वसृकुलस्त्रियोः । जादिं १४ । इति चवर्गतृतीयादावजयकोशः ॥

अर्तेरूच्च ॥ ४४ ॥

अर्तेर्मिर्धातोरूकारादेशश्च ॥ ऊर्मिर्वा स्त्रियां तरङ्गः ॥

भुवः कित् ॥ ४५ ॥

भवतेर्मिः किद्भवति ॥ भवन्ति भूतान्यस्मिन्निति भूमि-र्मही अज्ञाते कः । पा ५,३,७३ । भूमिका । अन्यरूपै-र्यदन्यस्य प्रवेशस्तत्र भूमिका । कृदिकारादिति ङीष् । भूमीपतिः ।

अश्नाते रश्च ॥ ४६ ॥

अशू व्याप्तौ ॥ अतो मिः । धातो रशादेशः । रश्मिः किरणो रज्जुश्च ॥

दल्मिः ॥ ४७ ॥

दल विदारणे ॥ अतो मिः । दल्मिमिन्द्रायुधम् विदुः॥

वीज्याज्वरिभ्यो निः ॥ ४८ ॥

वी गतौ । ज्या वयोहानौ ॥ ज्वर रोगे । पृषो-दरादित्वात् णत्वम् । वेणिः स्यात् केशविन्यासः । कृदि-

कारादिति ङीष्। प्रवेणी च स्त्रियामुभे इत्यमरः । तिस्रो वेण्यो ऽस्यामिति त्रिवेणिः। पूर्वपदादिति णत्वम्॥ ज्यानिः च्युतिः । ज्वरत्वरेत्यादिनोठ् । जूर्णिः स्त्रीरोगः ॥ बाहुलकात् टूचु शब्दे । अतो ऽपि निः । चोणिः । कृदिकारादिति ङीष् । चोणी ॥ डुक्रीञ् । क्रेणिः । क्रेणी । सस्यक्रेणी ॥

सृवृषिभ्यां कित् ॥ ४९ ॥

सरतेर्वृषेश्च निः कित्स्यात् ऋवर्णाच्च । पां ८, ४, १, १ । इति णत्वम् । सृणिः स्यादङ्कुशे पुमान् । आरचममलमवमथ्य सृणिम् शितायम् । ५, ५, । इति माघः सृणिः स्त्रियामित्यमरे प्रमादपाठः । सृणिर्द्वयोरिति बोद्धव्यम् । वृष्णिः क्षत्रियवैश्ययोः ॥

अङ्गेर्नलोपश्च ॥ ५० ॥

अगि गतौ ॥ अतो निर्नलोपश्च धातोः । अग्निर्वह्निः । वृषाकप्यग्नीति । पां ४, १, ३७, । ङीष् । ऐकारान्तादेशः । अग्नायी स्वाहा हुतभुक्प्रियेत्यमरः ॥

वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ॥ ५१ ॥

एभ्यो ऽष्टधातुभ्यो निप्रत्ययो भवति स च नित् ॥ वह्निरग्निः ॥ श्रेणिः पंक्तिः । निश्रेणिस्त्वधिरोहिणी । अमं २, २, १७ ॥ श्रोणिः कटिप्रदेशः ॥ योनिः । भगं योनिर्द्वयोरित्यमरः ॥ द्रोणिः सेचनी जनपदविशेषे ऽपि॥ ग्लानि दौर्बल्यम् ॥ हानिरपचयः क्षयश्च । परिहाणिः । प्रहाणिः

कृत्यचः। पां ८, ४, २९। इति णत्वम्। यच्चोक्तमनमाने त्यादि। पां ८, ४, २९, १,। तत्परिगणनं तत्प्रमदा इत्यत्रैव रचितः। ज्वरत्वरेत्यादिनोठ्॥ तर्णिर्मनः॥ बाहुलकात् श्रीङो ऽपि निप्रत्ययो ह्रस्वत्वम् च। श्रिनिः क्षत्रियः॥ तथा ह्लायते रपि ह्लानिः। मा गाह्लानिं मृणालीति॥ १९, सूर्यशतकम्।

घृणिपृश्निपार्ष्णिचुर्णिभूर्णि॥ ५२॥

एते पञ्च निपात्यन्ते घृ सेचने। निप्रत्ययः। गुणाभावः। घृणिः किरण॥ स्पृशतेः सलोपः। पृश्निरल्पशरीरः॥ पृषेर्वृद्धिश्च। पार्ष्णिःपादतलम्। उद्वेजयत्यङ्गुलिपार्ष्णिभागान्। १, ११, इति कुमारसम्भवम्॥ चरेरुपधाया उत्वम्। चूर्णिः कपर्दकसङ्ख्या। चूर्ण प्रेरणे। अशेषविच्च् तर्कं चूर्णयति ध्वंसयति। अत इः। चूर्णिर्महाभाष्यं कपर्दकश्च। कृदिकारादितिङीष्। चूर्णी कपर्दकशतमिति सुभूतिचन्द्रः॥ बिभर्तेरुत्वम्। भूर्णिर्धरणी॥ घूर्णिरप्यत्रेति रन्तिदेवः।

वृदृभ्यां विन्॥ ५३॥

आभ्याम् विन् स्यात्॥ ववि र्वंस्मरः॥ दर्विः सूपकारोपकरणद्रव्यम्। स्त्रियाम् ङीष्। दर्वी। दर्वीकरो दीर्घपृष्ठो दन्दशूको विलेशय इत्यमरः॥

जॄशॄस्तॄजागृभ्यः क्विन्॥ ५४॥

जॄ वयोहानौ। शॄ हिंसायां। स्तॄञ् आच्छादने। जागृ निद्राक्षये॥ एभ्यः क्विन् स्यात्। किन्त्वादित्वम्

रपरत्वं च । जीर्विः पशुः ॥ शीर्विर्हिंस्रः ॥ स्तीर्विरध्वर्युः ॥ जागृविर्नृपतिः ॥

## दिवो द्वे दीर्घश्चाभ्यासस्य ॥ ५५ ॥

दीव्यतेः क्विन् । द्विर्वचनम् । अभ्यासस्य दीर्घः । वलिलोपः । दीदिविः स्वर्गभक्तयोः । दीदिविरन्नियामन्ने ॥

## कृविघृष्विच्छविस्थविकिकीदिवि ॥ ५६ ॥

एते क्विनन्ता निपात्यन्ते ॥ डुकृञ् । कृविस्तन्तुवायद्रव्यम् ॥ घृषु सेचने । घृष्विर्वराहः ॥ छो । कृत्वं च । छविर्दीप्तिः ॥ तिष्ठतेरुत्वं च । स्थविस्तन्तुवायः ॥ दीव्यतेः किकीपूर्वात् । स्मृतश्चायं किकीदिवीरिति विक्रमादित्यकोशः । द्वितीयो ऽत्र दीर्घ इति वर्णविवेकः । जसि च । पां ७, ३, १०९, । इत्यत्र सूत्रे किकिपूर्वस्य दिवेर्धातोरिकारस्य दीर्घं कृत्वा किकिदीविर्व्याघ्र इत्युक्तम् । वोपालितेन किकिदिवश्चिकश्चाषः स्यादिति सर्वं ह्रस्वाः । मन्त्रे तु चाषेण किकिदीविना । ऋग्वे १०, ९७, १३, । इति प्रयोगो ऽस्ति ।

## पातेर्डतिः ॥ ५७ ॥

पा रक्षणे ॥ अतो डतिः स्यात् । डित्त्वात् टिलोपः । पातीति पतिः स्वामी । पतिना सिद्धे पृणाति पालयतीत्यर्थं डविधानमिति पारायणम् । बहुगणवतुडतीति । पां १, १, २३, । वतुसाहचर्याड्डितस्य डतेर्ग्रहणादस्य डतेरसंख्यात्वम् । डति च । पां १, १, २५ । इत्यत्र संख्या-

ग्रहणानुवृत्तेरस्य षट्संज्ञायाअभावः। ततः पतय इति जसो लुक् न भवति।

शकेर्ऋतिन्॥ ५८॥

शक्लृ शक्तौ॥ अस्मादृतिन्। शकृत् पुरीषम्॥ बाहुलकात् यञ्चेः कश्च। यकृत् कालखण्डम्। गवाश्वप्रभृतित्वान्नूनशकृत्। यकृन्मेदः।

अमेरतिः॥ ५९॥

अम गतौ। अस्मादतिः स्यात्। अमतिः कालः। बाहुलकात् व्रततिर्व्रततौ। मालतिर्मालती। स्वपतिरित्यादि।

वहिवस्यर्तिभ्यश्चित्॥ ६०॥

एभ्यो ऽतिश्चिद्भवति। वहतिः पवनः। वसतिर्गृहयामिन्योः स्त्रियामित्यमरः॥ अरतिः क्रोधः॥ बाहुलकादलतेरपि। अलतिर्गीतमाचिका॥

अञ्चेः को वा॥ ६१॥

अञ्चतेरप्यतिप्रत्ययः ककारश्चान्त्यादेशो विकल्पेन॥ अङ्कतिर्वातः। अञ्चतिः स एव॥

हन्तेरंह च॥ २॥

हन्तेरतिः। अंहादेशश्च धातोः॥ हन्ति दुर्निमित्तमनयेत्यंहतिर्दानम्। अंहतेरतिना सिद्धे निरुक्तार्थमेतत्। कलिङ्गास्तु अंहतेः क्तिनि ग्रहादित्वादिटियंहितिशब्दमिच्छन्ति॥

रमेर्नित् ॥ ६३ ॥

रमतेरतिर्निद्भवति ॥ रमतिः कालकामयोः ॥

सूङः क्रिः ॥ ६४ ॥

षूङ् सूतौ ॥ अस्माद्धातोः क्रिप्रत्ययः स्यात् । गुणाभावः । सूरिः पण्डितः । स्त्रियाम् सूरीति वर्णदेशना ॥

अदिशदिभूशुभिभ्यः क्रिन् ॥ ६५ ॥

एभ्यः क्रिन् ॥ अद्रिः पर्वतः । अद्रयो द्रुमशैलार्का इत्यमरः ॥ शद्रिः शर्करा ॥ भूरि प्रचुरं काञ्चनम् । शौरिकः कनकाध्यक्षः । अमं २, ८, १, ७, ॥ शुभ्रिर्ब्रह्मा ॥

वंक्र्यादयश्च ॥ ६६ ॥

क्रिनन्ता एते निपात्यन्ते ॥ वकि कौटिल्ये । वंक्रिर्वाद्यभेदो गृहदारु च ॥ टुवप । सम्प्रसारणाभावः । वप्रिः क्षेत्रमिति नम्रवृत्तिः ॥ अंक्रिरंघ्रिश्चरणः ॥ तदिः सौत्रो धातुः । तन्द्रिर्मोहः ॥ विभज्य नक्तन्दिवमस्ततन्द्रिणा । किं १, ९, । इति भारविः । कृदिकारादिति ङीष् । तन्द्री ॥ जिभी । बाहुलकाद्गुणः । भेरिर्वाद्यविशेषः । रवः प्रगल्भाहतभेरिसम्भव इति कुमारः । स्त्रियाम् भेरी । प्रोन्मादभेरीरवः ॥

राशदिभ्यां त्रिप ॥ ६७ ॥

आभ्याम् त्रिप्॥ रात्रिः क्षणदा । कृदिकारादिति ङीष् । रात्रीत्यपि । तिमिरपटलैरवगुण्ठिता रात्रय इति ॥ शत्रिः कुञ्जरः ॥

अदेस्त्रिन् ॥ ६८ ॥

अदेस्त्रिन् स्यात् ॥ अत्त्रिर्मुनिभेदः। तस्यापत्यम्। इतश्चानिञः। पा० ४,१,१२२,। इति ढक्। आत्त्रेयो मुनिरात्त्रेयी नदीभेदो रजस्वलेति धरणिः। गोवर्धनवृत्तौ तु अदेस्त्रिन्निच्चेत्यदेस्त्रिन् स्यात्। जित्। चकारात्त्रिप्। निदिति वचनान्नकारस्य नेत्संज्ञा। अत्त्री। अत्त्रिणौ। अत्त्रिण इति पापस्य नाम। अत्त्रिर्मुनिः। अदेस्त्रिन्निदिति पारायणीयम् ॥

पतेरत्त्रिन् ॥ ६९ ॥

पतेरत्त्रिन् स्यात् ॥ पतत्त्रिः। पतत्त्री। पतत्त्रयः। पक्षवाचकात्पतत्रशब्दान्मत्वर्थे निना तु पतत्त्री। पतत्त्रिणौ। पतत्त्रिणः ॥

मृकणिभ्यामीचिः ॥ ७० ॥

आभ्यामीचिप्रत्ययः ॥ मरीचिर्दीप्तिः ॥ कणीचिः पल्लवी प्रोक्ता निनादेऽपि च दृश्यत इति रभसः ॥

श्वयतेश्चित् ॥ ७१ ॥

टुओश्वि ॥ अस्मादीचिश्चिद्भवति। श्वयीचिर्व्याधिः।

वेञो डिच्च ॥ ७२ ॥

वेञ ईचिर्डिद्भवति ॥ वीचिस्तरङ्गः। नञ्समासेऽवीचिर्नरकभेदः ॥

ऋहनिभ्यामूषन् ॥ ७३ ॥

ऋ। हन् ॥ आभ्यामूषन्। अरूषः सूर्यः ॥ हनूषो राक्षसः।

पुरः कुषन् ॥ ७४ ॥

पुर अग्रगमने ॥ अतः कुषन् । पुरुषः पुमान् । विभाषा पुरुषे । पां ६, ३, १०६, । इति वा कोः कादेशः । कुपुरुषः । कापुरुषः । अन्येषामपि दृश्यते । पा० ६, ३, १३७ ॥ इति दीर्घः । पुरुषाः पूरुषा नराः । अमं २, ६, १, १, ॥

पॄनहिकलिभ्य उषच् ॥ ७५ ॥

एभ्यस्त्रिभ्य उषच् स्यात् ॥ परुषं निष्ठुरं वचः ॥ नहुषो राजर्षिः । अधर्मादेव नहुषः प्रतिपेदे रसातलं । १, १४ इति कामन्दकम् । नहुषः खररोमा च शेषवासुकितक्षका इति विक्रमादित्यकोशे । नागराजविशेषे ऽपि नहुषः । कलुषं पापम् ॥

पीयेरूषन् ॥ ७ ॥

पीय इति सौत्रो धातुः ॥ अस्मादूषन् । बहुलवचनात्पक्षे गुणो ऽपि । स्मृतं पीयूषं नवक्षीरे ऽमृते ऽपि वा । सप्तरात्रप्रसूतायाः क्षीरं पेयूषमुच्यत इति हारावली । पेयूषो ऽभिनवं पय इत्यमरः ॥ बाहुलकादङ्के रप्यूषन् । अङ्कूषो नकुलः ॥

मस्जेर्नुम् च ॥ ७७ ॥

टुमस्जो शुद्धौ ॥ अत ऊषन् स्यान्नुमागमश्च धातोः स चाचो ऽन्त्यात्परः । सकारस्य जश्त्वम् । दकारः । तस्य चुत्वम् । जकारः । ततो जकारद्वयम् । मञ्जूषा काष्ठमयं द्रव्यम् ॥

गण्डेश्च ॥ ७८ ॥

गण्डेरप्यूषन् ॥ गण्डूषो मुखपूरणे । २०६, । इति हारावली । गण्डूषा चमसी मसीत्यमरः ॥ स्त्रियां लाचा च गण्डूषा मञ्जूषा सह लिचयेति चन्द्रगोमी । गण्डूषो नापि कीर्तित इति वोपालितः ।

ऋतेररुः ॥ ७९ ॥

ऋ गतौ ॥ अस्मादरुः । अररुरायुधम् ॥

कुटः किच्च ॥ ८० ॥

कुटतेररुः किद्भवति ॥ कुटरुर्वस्त्रगृहम् । कित्प्रयोजनम् चिन्त्यम् ॥

शकादिभ्योऽटन् ॥ ८१ ॥

शक्नोत्यादिभ्योऽटन् स्यात् ॥ शकटोऽस्त्रियामित्यमरः । सङ्कीडन्ति शकटानीति वृत्तिः ॥ नडादित्वात् शाकटायनः ॥ वृञ् । वरटः कीटभेदश्च वरटा हंसयोषिति ककिर्गत्यर्थः । कङ्कटः सन्नाहः ॥ सृ गतौ । सरतीति सरटः कृकलासः ॥ देङ् । देवटः शिल्पी ॥ कम्पतेर्नलोपश्च । कपटो माया ॥ कर्कमर्ककर्पपर्पाणां सौत्रधातूनां कर्कटमर्कटकर्पटपर्पटाः ॥ कक्ख हसने । कक्खटं कठिनमिति धातुप्रदीपः ॥ चप सान्त्वने । पृषोदरादित्वादेत्वम् । चपेटचपटौ तले ॥ मय गतौ । मयटः प्रसादे । मयटः । मयटौ ॥ सर्वमिदं वर्णविवेके साधितम् । एवमन्येऽपि करटादयो बोद्धव्याः ।

कृकदिकडिकटिभ्यो ऽम्बच् ॥ ८२ ॥

डुकृञ् । कदिकडी सौत्रौ धातू । कटे वर्षावरणयोः । एभ्यो ऽम्बच् । करम्बं व्यामिश्रम् ॥ कदम्बो वृक्षभेदः ॥ कडम्बो ऽग्रभागः ॥ कटम्बो वादित्रम् ।

कदेर्णित्पक्षिणि ॥ ८३ ॥

कदिः पूर्वोक्तः ॥ अस्मादम्बच् णिद्भवति पक्षिणि वाच्ये । कादम्बः कलहंसः स्यात् । अमं २, ५, ८, ॥

कलिकर्दोरमः ॥ ८४ ॥

कल संख्याने । कर्द कुत्सिते शब्दे ॥ आभ्याममः । कलमः शालिभेदः ॥ कर्दमः पङ्कपापयोः ॥

कुणिपुल्योः किन्दच् ॥ ८५ ॥

कुण शब्दोपकरणयोः । पुल महत्त्वे ॥ आभ्यां किन्दच् । कुणिन्दः शब्दः ॥ पुलिन्दः शबरः ॥ बाहुलकादलतेरपि । अलिन्दो भवनैकदेशः । यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि । ३, ४८, । इति माघः । प्रज्ञादित्वादणि दीर्घादिरप्ययम् । गृहैकदेशे ऽप्यालिन्द इत्यमरदत्तः ॥

कुपेर्वा वश्च ॥ ८६ ॥

कुप क्रोधे ॥ अतः किन्दच् । वा वकारो ऽन्त्यादेशः । कुपिन्दकुविन्दौ तन्तुवाये ॥

नौ षञ्जेर्घथिन् ॥ ८७ ॥

षञ्ज सङ्गे ॥ अतो निपूर्वात् घथिन् । घित्त्वात्कुत्वं ।

उपसर्गादित्यादिना। पां ८, ३, ६५। षत्वं। निषङ्ग-थिरालिङ्गकः॥

उद्यर्तेश्चित्॥ ८८॥

उत्पूर्वादर्तेर्घथिन् चिद्वत् स्यात्। उदरथिः समुद्रः॥

सर्तेर्णिच्च॥ ८९॥

सर्तेर्घथिन् णिद्वत्। सारथिर्यन्ता॥

खर्जिपिञ्जादिभ्य ऊरोलचौ॥ ९०॥

खर्ज मार्जने। पिञ्ज हिंसायाम्॥ खर्जादिपिञ्जादिभ्यो यथाक्रममूरऊलचौ प्रत्ययौ भवतः खर्जूरो वृक्षभेदः स्यात्ख-र्जूरं रजते ऽपि च। स्त्रियां खर्जूरी॥ कृपू। कर्पूरो ऽस्त्री सुगन्धिद्रव्यम्। बाहुलकादत्र लत्वाभाव इति कृपे रो ल इत्यत्र वृत्तिः॥ धुनोतेः स्तुट् च। धुस्तूरः कनकाह्वयः। अमं २, ४, २, ५८॥ वल्लूरशालूरमल्लूरकस्तूर्यादयः। एत ऊरान्ता निपात्यन्ते॥ वल्ल संवरणे। वल्लूरम् शुष्कमांसे स्या-दित्यमरः॥ शालूरो मण्डूकः। एवं मल्लूरकस्तूरीप्र भृ-तयो ऽपि॥ पिञ्जादिभ्यः। पिञ्जूलं कुशवर्तिः॥ कचि दीप्तौ। कचूलोऽस्त्री स्त्रीगात्राभरणम्॥ लङ्गे र्वृद्धिश्च। लाङ्गूलं पुच्छम्॥ तमेर्बुग्दीर्घत्वे। ताम्बूलम् प्रसिद्धमेव॥ शॄ हिंसायाम्। आदेर्दगागमो वृद्धिश्च। शार्दूलो व्याघ्रः॥ दुनोतेः कुक् च। दुकूलं वस्त्रम्॥ एवं कुसूलादयो ऽपि। कुस श्लेषणे। कुसूलो दन्त्यसकारवानेव। कुसीदं च कुसूलं च मध्यदन्त्य मुदाहृतम्। शब्दभेद १००। इति॥

कुवश्चट् दीर्घश्च ॥ ९१ ॥

कु शब्दे॥ अतश्चट्प्रत्ययो भवति दीर्घत्वं च धातोः। कूचः स्तनमतङ्गजे॥ स्त्रियाम् कूची चित्रलेखनिका॥

समीणः ॥ ९२ ॥

इणः सम्युपपदे चट् दीर्घश्च धातोः। समीचः समुद्रः। समीची हरिणी॥

सिवेष्टेरू च ॥ ९३ ॥

सीव्यतेश्चट्प्रत्ययष्टेरूत्वं च॥ सूचो दर्भाङ्कुरः। स्त्रियां सूची प्रसिद्धैव। टित्त्वमनभ्युपगम्य गौरादित्वात्सूचीति महान्यासे॥

शमेर्वन् ॥ ९४ ॥

शमेर्वन्प्रत्ययः। शम्वो मुसललोहमुखम्॥

उल्वादयश्च ॥ ९५ ॥

वनन्ता एते निपात्यन्ते॥ उच समवाये। चकारस्य लत्वम् गुणाभावश्च। उल्वो गर्भः॥ शुच शोके। पूर्ववत्सर्वम्। शुल्वं ताम्रम्॥ नयतिवेत्योर्नुमागमो ह्रस्वत्वं च। निम्बो वृक्षभेदः। विम्बं मण्डलमोषधिविशेषश्च। गौरादित्वात् ङीष्। विम्बी ओषधिविशेषः॥ धन धान्ये। धन्वं धनुः। तद्योगाद्धन्वी धानुष्कः। के मम धन्विनोऽन्ये। ३,१०,। इति कुमारसम्भवः॥ जमु अदने। जम्वः कर्दमः। शिवादित्वात् जाम्वः। तद्योगाज्जाम्ववान्॥

स्थः स्तो ऽम्बजवकौ ॥ ९६ ॥

तिष्ठतेरस्तजवकौ भवतो धातोश्च स्तादेशः ॥ स्तम्बो गुच्छस्तृणादिन इत्यमरः॥ स्तवकः पुष्पगुच्छः । तारकादित्वात्स्तवकितः ॥

शाशपिभ्यां ददनौ ॥ ९७ ॥

शो तनूकरणे । शप आक्रोशे ॥ आभ्यां ददनौ । शादः कर्दमशष्पयोः । नडशादाद् ड्वलच् पा० ४,२,८८, । शाद्वलः ॥ पकारस्य बकारः । शब्दो निनादः । शब्दवैरेति । पा० ४,१,१७, । क्यङ् । शब्दायते शब्दं करोति । शाब्दिको वैयाकरणः ।

अब्दादयश्च ॥ ९८ ॥

ददनन्ता अमी निपात्यन्ते ॥ अव रक्षणे । अब्दो ऽवसरमेवयोरित्यमरः ॥ कौतेर्नुम् । कुन्दः पुष्पजातिः ॥ वृञो नुम् गुणाभावश्च । वृन्दं समूहः ॥ कनी दीप्तौ । कन्दम् । कन्दानि मूलसख्यानि विदुः कन्दांस्तु सूकरान् ॥ तुन्देर्नुम् च । तुन्दः स्थूलोदरम् । तुन्दपरिमृजः । तुन्दिलः । तुन्दी ॥ कन्दतेरत्रैव निपातनात्ककन्दो नृपविशेषः । तेन निर्वृत्ता काकन्दी नगरी ॥

वलिमलितनिभ्यः कयन् ॥ ९९ ॥

एभ्यः कयन्प्रत्ययः ॥ वलयोऽस्त्री हस्तभूषणम् ॥ मलयः पर्वतः । तनयः पुत्रः ॥ बाहुलकादामय गवयकिशलय इत्यादयो ऽपि द्रष्टव्याः ॥

वृह्रोः षुगदुकौ च ॥ १०० ॥

हृणोतिहरतिभ्याम् कयन् यथाक्रमं धातोः षुग्दुगागमौ भवतः ॥ हृञय आश्रयः ॥ क्रियते विषयैरिति हृदयं मनः । हृदयं लिखतीति हृदयस्य हृल्लेखयदण्लासेषु । पां ६,३, ५०,५१, । हृल्लेखः । रावणाङ्कपरिश्लिष्टा त्वं हृल्लेखकरी मम । २०, २२ । इति भट्टिः । वा शोके । हृच्छोकः । हृदयशोकः ॥

## मिपीभ्यां रुः ॥ १०१ ॥

डुमिञ् । पीङ् पाने ॥ आभ्यां रुः । मेरुः सुमेरुर्हेमाद्रिः । अमं १,१,१,४५, । पीयते रसानिति पेरुरादित्यः ॥ बाहुलकात्पिबतेश्च । पारुः स एव । सम्वत्सरवपुः पारुः देवर्षासौर्दिनप्रणीरिति हट्टचन्द्रः ।

## जत्वादयश्च ॥ १०२ ॥

रुप्रत्ययान्ता निपात्यन्ते ॥ जनी प्रादुर्भावे । नकारस्य तकारः । जत्रु स्कन्धसन्धिः । जत्रुणी । जत्रूणि ॥ शीङो क्रस्वत्वं गुगागमश्च । शिग्रुः शोभाञ्जनस्तरुः । विदादित्वादञि शैग्रवः ॥ तनेर्वि पूर्वस्य नकारस्य दकारः वितद्रुर्नदी ॥ कब वर्णे । वकारस्य दकारः । कद्रुर्वर्णभेदः ॥ असु क्षेपणे । अस्रु नयनजलम् । अश्नोतेरप्यश्रु तालव्यत्वात् । श्रुत्वा श्रुत्वाश्रु धरां त्यजतीति कीचकवधः । पञ्चमे पादे ऽश्वादयश्चेत्यपारायणीयम् ॥ एवं चभ्रुप्रभृतयो ऽप्यत्रैव द्रष्टव्याः ॥

## रुशादिभ्यां क्रुन् ॥ १०३ ॥

रु शब्दे । शद्लृ शातने ॥ आभ्यां क्रुन् । रुरुर्मृगभेदः । शातयतीति शत्रुः । निपातनाद्ध्रस्वत्वं च । शत्र्वादौ शत्रुरितिपाठात् शत्रुरेव शात्रवः । विघ्नानं शातवान् रामं । ५,८१, । इति भट्टिः ॥

जनिदाच्युसृवृमदिशमिनमि भृञ्भ्य इत्वन् त्वन् त्वण् क्विन् शक् स्य ठ डट टाटचः ॥ १०४ ॥

जनी प्रादुर्भावे । डुदाञ् । च्युङ् । सृ । वृञ् । मदि । शमु । णम । डुभृञ् ॥ एभ्यो नवभ्यो यथासंख्यं इत्वन् त्वन् त्वण् क्विन् शक् स्य ठ डट अटच् इत्येते नवैव प्रत्यया भवन्ति । जनित्वौ मातापितरौ ॥ दात्वं यज्ञकर्म्म ॥ च्यौत्नं बलं, सृणिरिन्दुरं कुशश्च । सृवृषिभ्यां किदित्यत्रापि सृणिशब्दः साधितः ॥ वृश ओषधिः । मत्स्यो मीनः । गौरादित्वात् ङीष् । मत्स्यस्य ङ्यामिति यलोपः । मत्सी । ङीषो ऽन्यत्र न यलोपः मत्स्यान्या । यः प्रवर्तते । आद्युदात्तोऽप्ययं साधितः ॥ शण्ढो ऽकृतदारः ॥ डित्त्वात् टिलोपः । नटो रङ्गोपजीवी ॥ भरटः कुलालः ।

अन्येभ्योऽपि दृश्यन्ते ॥ १०५ ॥

अन्येभ्योऽपि धातुभ्य इत्वनादयो दृश्यन्ते ॥ पा पाने । पेत्वममृतम् । क्षच बन्धने । शक् । कच्छः कूलम ॥ सरटो वातः ॥ ध्यै । ध्यात्वं चिन्ता ॥ जुहोतेर्होत्वो यजमानः ॥ लूञ् । लूनिर्व्रीहिः ॥ एवमन्येऽपि द्रष्टव्याः ॥

कुसेरुम्भोमेदेताः ॥ १०६ ॥

कुस श्लेषणे। अस्मादुम्भ उम ईद इत इत्येते चत्वारः प्रत्ययाः। कुसुम्भं महारजने क्लीवमिति भान्ते ऽमरः॥ कुसुमं पुष्पम्॥ कुसीदं वृद्धिजीविका। अमं २,९,४,॥ कुसितो जनपदः॥

सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः॥ १०७॥

इत्येते निपात्यन्ते॥ षणु दाने। असिप्रत्ययः। उपधावृद्धिः। सानसिर्हिरण्यम्॥ वृञो नुक् च। वर्णसिर्जलम्॥ पृ। पूर्ववत्सर्वम्। पर्णसिर्जलगृहम्॥ तड आघाते। तण्डुलाः प्रसिद्धाः। गुणोऽपि क्वचित् दोषायत इति भावः। तुषेणापि परित्यक्तस्तण्डुलो न प्ररोहति॥ अकि लक्षणे। उशच्। अङ्कुशः सृणिः। अङ्कुशोऽस्त्रीत्यमरः। संनिवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम्। १५,९७,। इति रघुः। काशाकाशदृशाङ्कुशमिति तालव्यान्ते चन्द्रगोमी॥ चष भक्षणे। आलच्। चषालो यूपकटकः। अमं २,७,१८,॥ इल स्वप्ने। वलच्प्रत्ययः। गुणाभावः। इल्वलस्तारकाविशेषः। इल्वलास्तच्छिरोदेशे तारका निवसन्ति या इत्यमरः। पल। पल्वलम ल्पसरः॥ ञिधृषा। ण्यप्रत्ययः। ऋकारस्येकारः। धिष्ण्य स्थाने च ऋक्षे च धिष्ण्योऽग्नौ धिष्ण्यमालय इति धरणिः। शलेर्यः। शल्यं वा पुंसि शङ्कुर्ना। अमं २,८,२,६१,। हृदि शल्यमिवार्पितम्। ८,८७,। इति रघुः॥

मृङ्शक्यविभ्यः क्तः॥ १०८॥

मूङ् बन्धने। शकॢ शक्तौ अवि शब्दे॥ एभ्यः क्लप्रत्ययः। मूलं वृध्नो ऽङ्घ्रिनामकः। अम० २,४,१,१२,॥ शक्लः प्रियम्वद इत्यमरः। अम्लो रसविशेषः स्यादम्लो मुखस्य भावनम्। वकाररहितो ऽपि मकारो ऽत्र। अम्लानवनशालानां पंक्तिरिति श्लेषात्॥

## माछाससिसूभ्यो यः॥ १०९॥

माछाससिसूएभ्यो यः॥ माया छद्म। अस्मायामेधेति। पां ५,२,१२१,। विनिः। मायावी। व्रीह्यादित्वादिनिः। मायी। मायावान्। व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः। किरातार्जुनीयम् १, ३०। इति भारविः॥ छाया स्यादातपाभाव उत्कोचप्रतिबिम्बयोः॥ सस्यं फले गुणे ऽपि च। सस्येन परिजातः।पां ५,२,६८,। सस्यको मणिः। सर्व्वगुणयुक्त इत्यर्थः॥वान्तादेशः। सव्यं दक्षिण वामयोः॥ बाहुलकादनितेरपि यः। अन्य इतरः। गहादित्वाच्छः। अषष्ठ्यतृतीयास्थस्येति। पां ६,३,९९,। च दुक्। अन्यदीयः॥ तथा सर्वादस्यतेरपि यः। समस्यार्थं इत्यत्र तु। अमं १, १, ५, ७,। समस्यशब्दं शक्तिसद्योश्च। पां ३, १, ९९,। इति चकारस्यानुक्तसमुच्चयार्थत्वात्साधयन्तीति दैवः।

## जनेर्यक्॥ ११०॥

जन जनने॥ अतो यक्प्रत्ययः॥ आत्मा वै पुत्ररूपेण जायते ऽस्यामिति स्मृतेः। जाया पत्नी। या जारवती

तीवरजायेति गतप्रत्यागतं प्रश्नोत्तरजातिः । ये विभाषा । पां ६, ४, ४३, । इत्यनेनैवालम् । पक्षे जायेति संज्ञा गम्यते जायाया निङ् समासान्तः । पां ५, ४, १३४, । युवजानिः । अन्यत्र जन्य निर्वादयुद्धयोरिति रभसः ॥

अघ्न्यादयश्च ॥ १११ ॥

यगन्ता अमी निपात्यन्ते ॥ हन्तेर्यक् । अडागमोपधालोपौ । अघ्न्यः प्रजापतिः । स्त्रियां टाप् । अघ्न्या माहेयीत्यमरः ॥ सम्पूर्वाद्ध्यायतेर्यक् । आतो लोपः । सन्ध्या प्रसिद्धैव । सन्ध्या सायं प्रतिज्ञयोरिति वासवदत्ताटीका । ईशानभूतिसंचयइव सन्ध्योच्छलितः ॥ कनी दीप्तौ । कन्या कुमारी । कन्यायाः कनीन च । पां ४,१,११६, । कानीनो व्यासकर्णयोः ॥ बन्ध बन्धने । बन्ध्याप्रसूता ॥ कौतेर्डुङ्च । कुड्यं भित्तिः ॥ मनो ध च । मध्यम् । मध्यान्मः । पां ४,३,८, । मध्यमः । मां ध्यायतीति मध्यमिति धातुपारायणीयम् ॥ वहेर्व ह्यम् ॥ तिकादित्वाद्वाह्यायनिः ॥ एवमहल्याकल्यकश्यप्रभृतयो द्रष्टव्याः ।

स्नामदिपद्यर्तिपॄशकिभ्यो वनिप् ॥ ११२ ॥

स्ना । मदी । पद । ऋ । पॄ । शक्लृ ॥ एभ्यः षड्भ्यो वनिप् । स्नावा रसिकः । स्नावानौ । स्नावानः । मद्वा शिवः ॥ पद्वा पन्थाः । अर्वा तुरगगर्ह्ययोरित्यमरः । अर्वाणौ अर्वाणः । अर्वणस्त्रसावनञः । पां ६, ४, १२७, । अच्छन्दसि । अर्वन्तौ । अर्वन्तः । भाष्ये तु छान्दसत्वमस्योक्तम् ।

स्त्रियामर्वती॥ पर्व ग्रन्थिः प्रस्तावश्च॥ शक्वा हस्ती। वनो र च। पां ४. १, ७,। इति ङीब्रेफौ। शक्वरी नदी॥

शीङ्क्रुशिरुहिजिश्विसृधृभ्यः क्वनिप्॥ ११३॥

एभ्यः सप्तभ्यः क्वनिप्॥ शीवाजगरः। स्त्रियां शीवरी गोधा॥ क्रुश्वाशृगालः रुह्वा वृक्षः॥ जयतेस्तुडागमः। जित्वा जेता जित्वरश्च॥ श्वित्वा वायुः॥ सृत्वा प्रजापतिः। धृत्वा विष्णुः॥ स्त्रियां जित्वरीत्यादि बोद्धव्यम्॥

ध्याप्योः संप्रसारणं च॥ ११४॥

ध्यै चिन्तायाम्। प्यैङ् वृद्धौ॥ आभ्यां क्वनिप् सम्प्रसारणं च धातोः। हलः। पां ६, ४, २,। इति दीर्घः। धीवा कर्म्मकारः। स्त्रियां धीवरी मत्स्याधानी॥ पीवा स्थूलः। पीवरी तरुणी॥

अदेर्ध च॥ ११५॥

अदेः क्वनिप् धकारश्चान्तादेशः॥ अध्वा मार्गः। अध्वनोऽलङ्गाम्यर्थे यदीनौ। अध्वन्यः अध्वनीनः। अन्तात्यन्तेति। पां ३, २, ४८,। डः। अध्वगः॥

प्र ईरशदोस्तुट् च॥ ११६॥

ईर गतौ। शादॢ शातने॥ आभ्यां प्रपूर्वाभ्यां क्वनिप् तुडागमश्च॥ प्रेत्वा सागरः। प्रेत्वरी॥ प्रशत्त्वा स एव प्रशत्त्वरी नदी॥

सर्वधातुभ्य इन्॥ ११७॥

यथादर्शनमिन् स्यात्॥ डुपचष्। पचिरग्निः। तुडि।

तुण्डिः । तद्योगात्तुण्डिभः॥ वलतेर्वलिः । वलिभः । वटिः । वटिभः । तुण्डिवलिवटेर्भः । पा० ५,२,१३९, । महाराजो वलिः । वलीत्यपि स्त्रियाम् । तद्युक्तं मुखमस्येति वलीमुखः । तिसृणां वलीनां समाहारस्त्रिवली त्रिवलि च ॥ मण । मणिः मणी । कंकणमणीजल्पाकदोर्वचः । स्थूलादित्वात्प्रशंसायां कन् । मणिकः । तदेव माणिक्यम् । पक्वदाडिमबीजाभं माणिक्यं शिशिरं विदुः ॥ वह्निः । वह्निका नाम चत्रिया जनपदस्य । कोपधादण् । पा० ४,२,१३२,। वाह्लिकं कुङ्कुमम् ॥ यज । यजिः । अग्नो हिजान्देवयजीन्निहन्मः । २,३४, । इति भट्टिः ॥ कनी दीप्त्यादौ । बाहुलकात् चुक्दीर्घौ । काञ्चिः । समादधे काञ्चिमकुञ्चयं कचानि-त्यभिनन्दः । स्त्रियां काञ्चीदामनि बद्धघर्घररवेति गोव-र्धनः ॥ गडि । गण्डिः ॥ तड । तडिः ॥ गल । गलिर्व-ल्लवी ॥ भ्राडृ । भ्राडिः पुष्पचयः ॥ काशृ । काशिः । वृद्धेःकोशलादित्वात् ञ्यञ् । काश्यौ । काशयः चत्रियाः । तेषां निवासोऽण् । काशयो देशः । काशिषु जातो भव इति ठञ्ञ्ठौ । काशिकः । काशिका । काशिविषयान्तःपाति-त्वाद्वाराणस्यास्तत्र भवत्वेन काशिषु भवेति सारसंग्रहवृत्तिः काशिका ॥ वासृ । वासिः काष्ठभेदिनी ॥ घट । घटिः । घटी । अघटिः कस्य चिन्नाम । अघटिस्थानम् ॥ यती । यतिः । यतिर्वसिष्ठो यतिनां वरिष्ठः । यतीनां निवासो मठः ॥ मल मल्ल । मल्लिः । मल्ली च । कुटजमल्ली । संज्ञायां

कनि मल्लिका ॥ केल्ट । केलिः क्रीडा । केलिः प्रयोजनमस्येति कैलः । आस्यते ऽस्मिन्नित्यासः । कैलश्चासावासश्चेति कैलासः । कृष्णसर्पवन्नित्यसमासः ॥ वदि । वन्दिः ॥ वन्दी च । ता एव वन्द्यो ऽस्त्रियः ॥ मसी परिमाणे । मसिः पत्त्राञ्जनं मेला । मेलानन्दो मसिर्मणिः । २१२, । इति हारावली । तत्रैव स्त्रियां मसी पात्राञ्जनम् । ० मसिर्नापीति रभसकोशः । अरुणदत्तोऽपि । इषुस्त्व मसयो द्वयोः ॥ कुट । कोटिरग्रभागः । बाहुलकाद्‌च गुणः । जट । जटिः । धूर्जटिः ॥ कट । कटिः ॥ हल । हलिः । हिल । हेलिः । प्रहेलिः ॥ बुध । बोधिः । महाबोधिः ॥ पण । पणिः । विपणिः पण्यवीथिका अमं २, २, २, ॥ कलन्ते स्पर्धमाना भाषन्ते ऽस्मिन्निति कलिर्विग्रहः । तत् कारणत्वात्कलिर्युगम् । टुनदि । नन्दिर्वृद्धिः । वितर्दिर्वेदिनन्द्य इति अमरस्वामी । आनन्दे ऽपि च नन्दिः स्त्री पुंसि स्याद्गणनायक इति वर्णविवेकः । आवश्यके णिनिः । ईशानानुचरो नन्दी तु वात्स्यायनः । कृदितिङीष् । नन्दीमुखाः पितरः प्रीयन्तामिति पारायणीयम् ॥

हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च ॥ ११८ ॥

हरत्यादिसप्तभ्य इन् स्यात् । हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीरे प्लवङ्गे च यमे वाते हरिः स्मृतः । हरिर्हयो हर्यश्वः । हरिणेतो हरीतः । संज्ञायां कन् । हरीतकी । गौरादित्वात् ङीष् ॥ पेषि-

वज्रम् । राहिवर्तौ ॥ वर्तिर्दीपोपकरणम् ॥ विद्यते पुण्यमस्यामिति वेदिः परिष्कृता भूमिः । अम० २,८,१७, ॥ छेदिर्वर्धकिशच्छेत्ता च ॥ छृत संशब्दने । इरादिकार्यम् । कीर्तिः स्यात्पुण्ययशसोः ।

इगुपधात्कित् ॥ ११९ ॥

इगुपधाद्धातोरिन् कित्स्यात् ॥ कृष विलेखने । कृषिः कर्षणम् । कृषी । कृषिरभूत्फलवत्यजनन्दने । रघुं ८,४, । ऋषी गतौ । ऋषिर्वसिष्ठादिः ॥ रुचिर्दीप्तिः ॥ शुचिः शुद्धिः ॥ लिप उपदेहे । लिपिः । बाहुलकाद्वत्वं च । लिविः । दिवाविभाप्रभेत्यादिना । पा० ३,२,२१, । टः । लिविं करोति लिविकरः ॥ तूल निष्कर्षे । तूलिः । तूली कूर्चिका ॥ एवमन्येऽपि द्रष्टव्याः । इगुपधात्किरिति प्रमादपाठः स्वरे विशेषादिति भाष्यम् ॥

भ्रमेः सम्प्रसारणं च ॥ १२० ॥

भ्राम्यतेरिन् कित्संप्रसारणं च ॥ भृमिर्वातः । भ्रमिरित्यपि बाहुलकात् ॥

क्रमितमिशतिस्तम्भामत इच्च ॥ १२१ ॥

क्रमु पादविक्षेपे । तमु काङ्क्षायाम् । शतिस्तम्भौ सौत्रौ । एभ्यश्चतुर्भ्य इन् कित् । एषामत इकारादेशः ॥ क्रिमिः क्षुद्रजन्तुः । पामादित्वात् क्रिमिणः । यवादित्वात् क्रिमिमान् । क्रमिरित्यपि संप्रसारणानुवृत्तेरिति केचित् । लुपन्ति कीटक्रमयः परितस्तथैव इति सागरनन्दी नागा-

र्जुनप्रयोगश्च । वम्रिभवं कार्ममित्यादि वर्णविवेके विस्तरेण दर्शितम् ॥ तिमिर्मत्स्यभेदः स्यात् ॥ ग्रितिर्मेचकशुक्लयोः ॥ स्तिभिः समुद्रः ॥

मनेरुच्च ॥ १२२ ॥

मन्यतेरिन् किदुकारश्चाकारस्य ॥ मन्यते जानातीति मुनिर्वसिष्ठादिः । मुनिरियं ब्राह्मणी । बह्वादित्वान्मुनी । मुनेर्भावः कर्म वा । इगन्तादित्यण् । मौनं सर्वार्थसाधकम् ॥

वर्णेर्वलिश्चाहिरण्ये ॥ १२३ ॥

वर्णिः सौत्रो धातुः ॥ अत इन् कित् । धातोर्वलिरित्ययमादेशः । करोपहारयोः पुंसि वलिः प्राण्यङ्गजे स्त्रियामित्यमरः । चतुर्थीतदर्थेति । पा० २,१,३६, । यचवलिः । देववलिः । हिरण्ये तु वर्णिः सुवर्णम् ॥

वसिवपियजिराजिव्रजि सदिहनिवाशिवादिवारिभ्य इञ् ॥ १२४ ॥

एभ्यो दशभ्य इञ् ॥ वासिश्छेदनवस्तुनि ॥ वापिरुदकाधारः । स्त्रियां वृदिति ङीष् । वापी प्रसिद्धा ॥ याजिर्यष्टा ॥ राजिः पंक्तिः । ङीष् । राजी । वप्रकरणेऽन्यत्रापि दृश्यते वप्रत्ययः । पा० ५,२,१०९,४, । राजीवं पद्मम् । राजीवराजीवशलोलभृङ्गं । ४, ९, । इति माघः । व्राजिर्वातालो । सादिः सारथिः ॥ घातिः पक्षिबन्धनो स्यात् । निघातिर्लोहघातिनी ॥ वाश्रु शब्दे । वाशिरग्निः ॥ वदेर्ण्यन्ताद्वादिर्विद्वान् बहुलवचनादण्यन्तादपीञ् । वदन्तीति वादयो वाचका

इति भूवादिसूत्रे न्यासः ॥ वृणोतेर्ण्यन्ताद्वारिर्गजबन्धनी । जले तु क्लीवम् । आवारिर्हट्टवेश्मस्विति शब्दार्णवः ॥ बाहुलकाद्धृञो ऽपि । हारिः पथिकसंहतौ । सम्प्रहारिः ॥ खटतेः खाटिः शुष्कव्रणस्थानम् । कुखाटिः स्यादसंग्रहः ॥

णहो भश्च ॥ १२५ ॥

णह बन्धने ॥ अत इञ् भश्चान्तादेशः । नाभिः स्यात् चत्रिये पुंसि नाभिः प्राण्यङ्गजे स्त्रियाम् । ङीष् । नाभी । पूर्वं नाभेः कायस्येति नात्र नाभिरेकदेशिनीति न्यासः । नाभिशब्दः पुंलिङ्गो ऽप्ययं प्राण्यङ्गे गतानुगमात् प्रयुज्यते । तथा च किरातकाव्यम् । समुच्छसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीविनाभिभिः । ८,२४, । अत एव मृगनाभिर्मृगमदः कस्तूरी चेति मृगनाभिशब्दस्य पुंस्त्वमित्यमरकोशटीकायां दर्शितम् । गवादिषु नाभि नभ चेति पाठाद्धितार्थे यत् । नभ्यं तैलम् । सिध्मादित्वान्नाभिलः । अजिति । पा० ५,४,७५, । योगविभागेन ससमासान्तः पद्मनाभः ॥

कृषेर्वृद्धिश्छन्दसि ॥ १२६ ॥

कृषतेरिञ् वृद्धिश्च धातोः ॥ कार्षिरग्निः । भाषायां तु कृषिः ॥

शः शकुनौ ॥ १२७ ॥

शृणातेः शकुनौ वाच्य इञ् ॥ शारिः पक्षी । शारिका । शुकशारिकम् । विभाषा वृक्षमृगेति । पा० २,४,१२, । परिपच्च एकवद्भावः । क्लीवत्वम् । शारिस्तु पाशके पुंसि । परि-

णायेन शारीन् हन्तीति शारिका वृत्तिः। शकुनेरन्येच शरिर्हिंस्रः। कपिलिकादित्वाल्लत्वम्। शालिः। दुःसंहो ऽपिशलिः। बाह्वादित्वादिञ्। आपिशलिः॥

क्रञ उदीचां कारुषु॥ १२८॥

क्रञ उदीचां मतेन कारुषु वाच्येष्विञ्॥ कारिः शिल्पी शिल्पिनो ऽन्यत्र करिः॥

जनिघसिभ्यामिण्॥ १२९॥

जनी। घस्लृ॥ आभ्यामिण्। जनिवध्योश्चेतीणवृद्धि-प्रतिषेधः। जनिर्जननम्॥ घासिरग्निः॥ वाहुलकात् शल-तिपलतिभ्यां च। शालिपाली स्त्रियामुभे इति वाचस्पतिः॥ प्रत्ययान्तरकरणं स्वरार्थम्॥

अज्यतिभ्यां च॥ १३०॥

आजिः संग्रामः॥ आतिः शरातिपक्षी। शोभन आतिः स्वाती नक्षत्रम्॥

पादे च॥ १३१॥

पादे चोपपदे ऽज्यतिभ्यामिण्॥ पादस्य पदाज्यातिगो-पहतेषु। पा० ६,३,५२,। इति पदादेशः। बहुलवचना-दजेर्वीभावाभावः। पदाजिः पदातिः पदग उच्यते॥

अशिपणाय्यो रुडायलुकौ च॥ १३२॥

अशू व्याप्तौ। पण व्यवहार आय्यप्रत्ययान्तः॥ आभ्या-मिण्। अनयोर्यथाक्रमं रुट्आयलुकौ च भवतः। राशिः पुञ्जः॥ पाणिः करः॥

वातेर्डिच्च ॥ १३३ ॥

वातेरिण्प्रत्ययो भवति डिच्च । डित्त्वात् टिलोपः ॥ वातीति विः पक्षी । स्त्रियां वीत्यपि । बहुवि जयति वनम् । अटन्ति वयो ऽस्यामित्यटविः । पदस्य विः पदविः । कृदिति ङीष् । पदवी । वेञो डिच्चेत्युपाध्यायसर्वस्वम् ॥

प्रे ह्वरतेः कूपे ॥ १३४ ॥

प्रपूर्वाद्ध्वरतेः कूपे वाच्य इण् । स च डित् । प्रह्विः कूपः । कूपादन्यत्र ह्वरिः ॥

नौ व्यो यलोपः पूर्वस्य च दीर्घः ॥ १३५ ॥

व्येञ् सम्वरणे ॥ अस्मान्निपूर्वादिञ् । धातोर्यलोपः । निशब्दस्य दीर्घत्वम् ॥ नीविर्वासोबन्धनी । स्त्रियां ङीष् । नीवी । नीवीं प्रति प्रणिहिते तु करे प्रियेण । नीवी मूलधनमपीत्यमरः ॥ वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् इत्यत इञ् इत्यत्रानुवर्त्तते । न त्विण् । उत्तरत्रोदात्तवचनात् ॥

समाने ख्यः स चोदात्तः ॥ १३६ ॥

ख्या प्रकथने ॥ अतः समान उपपद इञ् स चोदात्तः । समानस्य सभावः । टिलोपयलोपौ । सावनङादिकार्यम् । सखा मित्रसहाययोः । सखायौ । सखायः । सखाल्पो ऽसखा । अल्पार्थे नञ् । यथालवणं व्यञ्जनम् । किञ्चिल्लवणसहितमित्यर्थः । एवं च । तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥

सखिना वानरेन्द्रेण वानरैश्च महाबलैरित्यादौ क्वचिद् घिसंज्ञा ॥

आङि श्रिहनिभ्यां ह्रस्वश्च ॥ १३७ ॥

श्रिहनिभ्यामाङ्युपपद इञ् । स च डिद्भवति । आङो ह्रस्वश्च ॥ अश्रिः कोणः । स्त्रियः पाल्यश्रिकोटय इत्यमरः । सुप्रातसुश्वेति । पा० ५,४,१२०, । चतुरश्रः ॥ अहिः सर्पः । अहिर्वृत्रासुरे ऽपि च । हान्ते ८, । इति विश्वः । अहिद्विषस्तद्भवता निशम्यताम् । १,४१, । इति माघः ॥

अच इः ॥ १३८ ॥

अजन्ताद्धातोरिः स्यात् ॥ लूञ् । लविश्छेदको लोहः ॥ पूञ् । पविर्वज्रम् । वज्रो ऽस्त्री हीरके पवावित्यमरः ॥ तॄ । तरिर्वस्त्रादिस्थापनभाण्डम् । स्त्रियां तरी । तरीषु तत्रत्यमफल्गु भाण्डम् । ३,७६, । इति माघः ॥ रु । रविर्मथनम् ॥ कु शब्दे कु वर्ण इत्यतो वा कविः काव्यकर्त्ता । कविः काव्यकरे सूरौ कविर्वाल्मीकिशुक्रयोः । विश्व वान्ते २३, । विनयेन विना का श्रीः का निशा शशिना विना । रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता । कवेर्भावः काव्यम् । कर्म वा । अस्मिन्नर्थे ऽपि काव्यम् । तर्द्धोगारकाव्यं तन्त्रयो ऽपि । स्त्रियां कवीत्यपि । अर्तेररिः शत्रुः । कपिलिकादित्वादलिर्भ्रमरः । अलमलेरिव गन्धरसावमू । ६,१२, । इति माघः । अलतेरजन्तादिनिः । अली नान्तो ऽपि । अलिर्मधकरो ऽली चेति शब्दार्णवः । मलिनिमालिनि मा-

धवयोषिताम्। ६,४,। इति माघः। दलतेर्दलिः स्त्री लोष्टं लेष्टूनां स महान्दरलिर्द्वयोरिति रन्तिदेवः॥ उखनखेति नखः। नखेनातिक्रामतीति नखयतेरेव इः। नखिः। शस्त्रेण पणितुं व्यवहर्तुं शीलमस्येति णिनिः। शस्त्रपाणी। नदीनां च नखीनां च शृङ्गीणां शस्त्रपाणिनां विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु चेति॥ सूचयतेः सूचिः। यस्य वज्रमणेर्भेदे भिद्यन्ते लोहसूचय इति बालरामायणम्॥ इहेक इति वक्तव्ये ऽच इति वचनं सन्ध्यक्षरादप्याचारक्विबन्ताद्यथा स्यादिति भाष्यम्॥

खनिकष्यंज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च॥ ॥ १३९ ॥

एभ्यो दशधातुभ्य इः स्यात्॥ खनिर्द्रव्यस्थानम्। पृषोदरादित्वात् दीर्घत्वे खानिरित्यपि। कोशः कृतः सकलसत्खानिरत्नवानिति विक्रमादित्यकोशः॥ कषिर्हिंस्रः॥ अञ्जिः प्रेषणिकः। कृदिकारादिति ङीष्। अञ्जी मङ्गलार्थः॥ असिः खड्गः॥ वसिर्वस्त्रम्। वनिरग्निः। धान्यवनिर्धान्यराशिः। वनु याचने। वनिं याच्ञामिच्छतीति क्यच्। वनीयति। तदन्तात् ण्वुल्। वनीयकः प्रार्थक इति वर्णदेशना। गद्यरामायणकाव्ये तु कृपण इव नदनीपकोपसेवितः पर्वत इति श्लेषादीष्टपकारवानपि वनीपकशब्दः॥ सनिरध्येषणा॥ ध्वनिः शब्दः॥ ग्रन्थिः पर्व। ग्रन्थिर्ना पर्वपरुषी इत्यमरः॥ चरिः पशुः॥ इञि सिद्ध इवचनं स्वरार्थम्॥

वृतेश्छन्दसि ॥ १४० ॥

वृतेश्छन्दसि इः स्यात् । वर्त्तिर्योगकर्मद्रव्यम् ॥

भुजेः किच्च ॥ १४१ ॥

भुज पालने ॥ अत इः किद्भवति । भुजिरग्निः ॥

कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च ॥ १४२ ॥

एभ्यः सप्तभ्य इः स्यात् । स च किद्भवति ॥ इत्त्वादिकार्यम् । किरिर्वराहः ॥ गिरिर्गीर्वाच्चिरोगयोः । गिरिकाणः ॥ शिरिर्हन्ता ॥ पुरिर्नगरं नदी च ॥ कुटिः शाला ॥ भिदिर्वज्रम् ॥ छिदिः परशुः ॥ बाहुलकात्तरतेः सन्वत्तुक् चाभ्यासस्य । तरतेरिप्रत्ययः स च कित् । सन्वत्कार्यमभ्यासस्य च तुगागमः । तित्तिरिः पक्षिभेदः स्यादिति प्राणिरजतादिभ्यो ऽञित्यत्र रक्षितः ॥

कुठिकंप्योर्नलोपश्च ॥ १४३ ॥

कुठि गतिप्रतिघाते ॥ कपि चलने ॥ आभ्यामिः किद्भवति धातोर्नलोपश्च । कुठिः पर्वतवृक्षयोः ॥ कपिर्वानरो वर्णनाम च । वृषः कपिरस्येत्यन्येषामपीति दीर्घः । वृषाकपिः शिवे विष्णौ पान्ते ऽमरः । कपिज्ञात्योर्ढक् । पां ५,१,१२७, । कापेयम् । वृषाकपायी श्रीगौर्योरिति यान्ते ऽमरः । कपिशकपिलौ लोमादिसिध्मादौ ॥

सर्वधातुभ्यो मनिन् ॥ १४४ ॥

सर्वधातुभ्यो मनिन् स्यात् ॥ क्रियते तदिति कर्म क्रिया । अर्धर्चादित्वात्कर्माणि कुरुते शुभम् । कर्म व्याप्ये

क्रियायां च पुंनपुंसकयोर्मतमिति रुद्रः । तद्युक्तात्कर्मणोऽण् । पा० ५,४,३६, । कार्मणम् । कर्मवेशाद्यत् । पा० ५,१,१००, । कर्मण्यं सौवीर्यम् । कर्मण उकञ् । पा० ५,१,१०३, । कार्मुकम् । तत्कार्मुकं कर्मसु यस्य शक्तिः । कि० ३,४८, । इति भारविः ॥ चरितं तदिति चर्म ॥ भसितं तदिति भस्म । भूते ऽपि दृश्यन्ते ॥ जनी । जन्मोत्पत्तिः ॥ शॄ । शर्म सुखम् ॥ हि । हेम सुवर्णम् ॥ श्लिष । श्लेष्मा कफः । पामादित्वात् श्लेष्मणः । सिध्मादित्वात् श्लेष्मलः ॥ तॄ । तर्म यूपाग्रम् । तर्मणी । तर्माणि ॥ ष्ठा । स्थाम बलम् । स्थामनी । स्थामानि ॥ डुदाञ् । दाम । दामनी । दामानि । दामा । दामानौ । दामानः । पक्षे टाप् । दामा । दामे । दामाः । न पुंसि दाम सन्दानमित्यमरः ॥ छादेर्णिलोपः । इस्मन्निति ह्रस्वत्वम् । छद्म माया ॥ सुष्ठु त्रायत इति सुत्रामा । अन्येषामपि दीर्घत्वे सूत्रामति वर्णविवेकः ॥ उष दाहे । उष्मा वाष्पः ॥

बृंहेर्नोऽच्च ॥ १४५ ॥

वृहि वृद्धौ ॥ अतो मनिन् । नकारस्याकारः । रत्वम् । ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिरित्यमरः । हनस्त च । पा० ३,१,१०८ । ब्रह्महत्या सुरापाणं स्तेयं गुर्वङ्गनागमः । महापातकान्याहुस्तत्संसर्गश्च पञ्चमम् ॥

अशिशकिभ्यां छन्दसि ॥ १४६ ॥

आभ्यां छन्दसि मनिन् स्यात् ॥ अश्मा पाषाणः ।

भाषायामपि दृश्यत । अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम् । अन्धायाश्च सुतं मन्ये यस्य माता न पश्यतीति जिनेन्द्रबुद्धिः ॥ प्रक्लेन्द्रः ॥

हृभृधृसृस्तृशृभ्य इमनिच् ॥ १४७ ॥

एभ्यः षड्भ्य इमनिच् स्यात् ॥ हरिमा कालः ॥ भरिमा कुटुम्बम् ॥ धरिमा रूपम् ॥ सरिमा वायुः ॥ स्तरिमा तल्पम् ॥ शरिमा प्रसवः ॥ दीर्घादिरप्ययं प्रत्यय इति केचित् ॥

जनिमृङ्भ्यामिमनिन् ॥ १४८ ॥

आभ्यामिमनिन् ॥ जनिमा जन्म ॥ मरिमा मृत्युः ॥

वेञः सर्वत्र ॥ १४९ ॥

छन्दसि भाषायां चेमनिन् ॥ वेमा पुंसि वायदण्डः । अर्धर्चादित्वात्सामनी वेमनीति वृत्तिः ॥

नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन् ॥ १५० ॥

सप्तामी मनिनन्ता निपात्यन्ते ॥ म्ना अभ्यासे । माभावः । म्नायते ऽनेनेति नाम संज्ञा । स्वार्थे भागरूपनामभ्यो धेयट् । पां ५,४,३६,२ । नामधेयं च नाम च । अमं १,१,५,८ ॥ सिनोतेर्दीर्घत्वम् । सीमावधिः । सीमानौ । सीमानः ॥ स्त्रियां डाबुभाभ्यामन्यतरस्याम् । पां४,१,१३ । सीमा । सीमे । सीमाः । ◌ेञ ओ.त्वमन्तस्य । व्योम पुष्करम् । रौते रोम गात्रकेशः । लूञ् । लोम स एव । पिवतेः पुगागमः । पाप्मा पुंसि किल्बिषे ॥ ध्य.यतेर्ध्यामा

परिमाणं तेजश्च ॥ बाहुलकाद्यचयतेरपि । यक्ष्मा राज-रोगः । राजयक्ष्मेव रोगाणामिति भावः ॥ षू प्रेरणे। सोमा चन्द्रो यच्चद्रव्यं च ॥ हु दानादनयोः । होमाहुतिः ॥ डुधाञ् । धाम तेजः स्थानं च ॥

मिथुने मनिः ॥ १५१ ॥

यत्रोपसर्गो धातुक्रियया सम्बद्धस्तन्मिथुनम् । तत्र धातो र्मनिः स्यात् ॥ सुशर्मा राजविशेषः ॥ धृञ् । सुधर्मा क्षत्रियः ॥ एवमन्ये ऽपि । स्वरार्थमिदम् ॥

सातिभ्यां मनिन्मनिणौ ॥ १५२ ॥

स्यतिभ्यां यथाक्रमं मनिन्मनिणौ स्याताम् ॥ स्यति दुःखयति दुरध्येयत्वात् । साम । सामनी । सामानि । अचतुरेति निपातनात् दधिपयआदित्वाट्टक्साग्रे ॥ आत्मा पुरुषः । आत्मने हितमात्मनीनम् । आत्मन्विश्वजनेति । पां ५,१,९ । खः ॥

हनिमशिभ्यां सिकन् ॥ १५३ ॥

आभ्यां सिकन् स्यात् ॥ हंसिका हंसयोषिता ॥ मक्षिका भम्भराली स्यात् । १२३ । इति हारावली ॥

कोररन् ॥ १५४ ॥

कोतेररन् स्यात् । कवरः पाठकः । जानपदेत्यादिना । पा० ४,१,४२ । ङीप् । कवरी केशविन्यासः ॥

गिर उडच् ॥ १५५ ॥

गिरतेरुडच् स्यात् ॥ गरुडस्तार्क्ष्यः । गरुता डीयत

इति डप्रकरणे ऽन्येष्वपि दृश्यते इति डप्रत्यये पृषोदरादित्वात्तलोपे गरुड इत्युपाध्यायसर्वस्वम् । ततो ऽनार्षमिदम् ॥

इन्देः कमिन्नलोपश्च ॥ १५६

इन्देः कमिन् स्यान्नलोपश्च धातोः ॥ इदं प्रत्यक्षप्रत्यवमर्शी सर्वनामसंज्ञकः ॥ इन्देरमिन्किच्चेति सर्वस्वे सूत्रं दृश्यते ॥

कायतेर्डिमिः ॥ १५७ ॥

कै शब्दे ॥ अतो डिमिः स्यात् । इकार उच्चारणार्थः । डकारष्टिलोपार्थः । किं क्षेपे । पा० २, १, ६४, । इति समासे किमः क्षेपे । पा ५, ४, ५७, । इति समासान्तनिषेधे च । किंराजा यो न रक्षति प्रजां । किंसखा योऽभिद्रुह्यति ॥

सर्वधातुभ्यः ष्ट्रन् ॥ १५८ ॥

सर्वधातुभ्यः ष्ट्रन् स्यात् ॥ वस । वस्त्रम् । अर्धर्चादिरयम् ॥ असु । अस्त्रम् ॥ शसु । शस्त्रमायुधम् ॥ पत्लृ । पत्रं वाहनम् ॥ राजृ । षत्वादिकार्य्यम् । राष्ट्रो देशः । अर्धर्चादिरयम् । उष्ट्रो राष्ट्रो भ्राष्ट्र इति भागवृत्तिः ॥ छद अपवारणे । णिलोपः । इस्मन्निति ह्रस्वत्वम् । छत्रमातपत्रम् । अर्धर्चादिरयम् । गुरुवैगुण्याच्छादनाच्छत्त्रशीलश्छात्त्रः । छात्त्रगोमी छात्त्रोपासकः । गोमी गोसानुपासक इति धरणिः । गोमी निन्द्यप्रशस्तयोरिति रुद्रकोशः । छात्त्रगोमिनौ । छात्त्रगोमिन इति । चुरादित्वात्

णत्वाभावः । मनोज्ञादित्वाच्छात्त्रकम् । गन्त्रृ । रात्रा निबद्धा सुचिरं तिष्ठति कालान्तरं गच्छतीति पुत्रपौत्रादिकं व्याप्नोतीति वा गन्त्री गन्त्रिका । षित्त्वात् ङीष् ॥ पिबतेः पात्रं स्याद्योग्यभन्त्रिणोः । अध्वर्चादिरयम् । अपात्रः पात्रतां याति यत्र पात्रो न विद्यते ॥ दंश दशने । षत्वादिकार्य्यम् । दंष्ट्रा दन्तः । मातरि षिच्च । पा० ४,२,३६,२, । इति षित्त्वादेव ङीषि सिद्धे गौरादिषु मातामहपितामहयोः पाठः षिल्लक्षणस्य ङीषो ऽनित्यत्वज्ञापनार्थम् । तेन दंष्ट्रेति न षिल्लक्षणो ङीष् । अतष्टाबेव ॥ ष्ट्रन्नित्येतावदेव सूत्रं सर्वधातुग्रहणमपारायणीयमिति हट्टचन्द्रः ॥

असिजगमिनमिहनिविश्यशां वृद्धिश्च ॥ १५९ ॥

एभ्यः षड्भ्यः ष्ट्रन् भवत्येषां वृद्धिश्च ॥ संयोगादिलोपः । षत्वादिकार्य्यम् । आष्ट्रो नाम्वरीदम् । ऋस्जो रोपधयो रेति । पा०६,४,४७ । रत्वमत्र नास्ति संज्ञाया नियतवर्णत्वात् । गान्त्रं शकटम् ॥ नान्त्रं स्तोत्रम् ॥ हान्त्रं मरणम् ॥ वैष्ट्रं पिष्टपम् ॥ आष्ट्रमाकाशम् । तितुत्रेतीट्प्रतिषेधोऽत्र पूर्वत्रापि ॥

दिवेर्द्युच्च ॥ १६० ॥

दीव्यतेः ष्ट्रन् द्युरादेशो वृद्धिश्च धातोः ॥ द्यौत्रं ज्योतिः ।

उषिखनिभ्यां कित् ॥ १६१ ॥

आभ्यां ष्ट्रन् किद् भवति ॥ उष्ट्रः पशुभेदः ॥ जन-

सनेति । पा० ६,४,४२ । आत्वम् । खात्रं खनित्रं जलाधारविशेषश्च ॥

सिविमुच्योष्टेरू च ॥ १६२ ॥

षिवू । मुच्लृ ॥ आभ्यां ष्ट्रन् किद्भवति । टेरूकारादेशः । सूत्रं तन्तुः ॥ मूत्रं प्रस्रावः । अम० २,६,३,१८ । तारकादित्वान्मूत्रितो मनुष्यः ॥

अमिचिमिदिशसिभ्यः क्त्रः ॥ १६३ ॥

एभ्यश्चतुर्भ्यः क्त्रः स्यात् ॥ अन्त्रमुदरनाडी ॥ चित्रमालेख्यम् । चित्रा । चैत्रिकः । चैत्रः । मित्रं सुहृत् । नित्यं क्लीबलिङ्गम् । अयं मित्रम् । इयं मित्रम् । शोभनानि मित्राण्यस्याः । सुमित्रा । बाह्वादित्वात्सौमित्रिर्लक्ष्मणः ॥ शस्त्रमायुधम् ॥

पुवो ह्रस्वश्च ॥ १६४ ॥

पुवः क्त्रः स्यात् । धातोर्ह्रस्वत्वम् । पुनाति पुरुषानिति पुत्रः स्यादात्मसम्भवः । अनचि च । पा० ८,४,४७ । इति पक्षे द्वित्वम् । पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवेति स्मृतिः । तथात्मासि त्वं जीव वत्सरशतम् । आत्मा वै जायते पुत्रः । अस्मिन् पक्षे तकारद्वयम् ॥

स्त्यायतेर्ड्रट् ॥ १६५ ॥

स्त्यै शब्दसङ्घातयोः ॥ अस्मात् ड्रट् । डित्वात् टिलोपः टित्वात् ङीप् । वलि लोपः । स्त्री स्तनकेशवती । स्त्रियः

पा॰६,४,७९,८०। इतीयङ्। स्त्रियौ स्त्रिय इति। वाम्‌शसोः। स्त्रीयं स्त्रीं, स्त्रियः स्त्रीः। अहो दैवस्य माहात्म्यं न मया दृष्टमीदृशम्। यदेकाक्षरसंयुक्तो दीषराशिर्महान् कृत इति व्यासः॥

गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः॥ १६६॥

एभ्यो ऽष्टभ्यस्त्रः स्यात्॥ गुङ्। गोत्रं स्यान्नामवंशयोः। गोत्रा पृथ्वी धत्रं गृहम्। वेत्रं लताविशेषः। पत्त्रं गार्हपत्यम्। वक्त्रं मुखं, यन्त्रं कर्मकाष्ठम्। सीदन्ति सज्जना अत्रेति सत्रं यज्ञः। सतस्त्रायत इति सत्त्रमित्यपि सर्वत्र व्युत्पत्त्यन्तरम्। दीर्घसत्त्रः। क्षद इति सौत्रः। क्षत्रं ब्राह्मणानन्तरजातिः। क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः। रघुं २,५३। इति पद्यान्तरम्। छ्रनि सिद्धे स्त्रियां विशेषः॥ रघुं २,५३। इति पद्यान्तरम् छ्रनि सिद्धे स्त्रियां विशेषः।

हुयामाश्रुभसिभ्यस्त्रन्॥ १६७॥

एभ्यः पञ्चधातुभ्यस्त्रन्॥ होत्रमाहुतिः॥ यात्रा गमनम्॥ मात्रा मानविभूषयोः॥ श्रोत्रं कर्णः॥ भस्त्रा चर्मप्रसेविका॥

गमेरा च॥ १६८॥

गमेस्त्रन् धातोरान्तादेशश्च॥ गात्रं स्यादङ्गदेहयोः॥

दादिभ्यश्छन्दसि॥ १६९॥

दाप् लवने। एवमादिभ्यश्छन्दसि त्रन् स्यात्॥ दात्रं धान्यादिच्छेदनसाधनम्॥ पात्रं तु भाजनं योग्यमित्यमरः॥

क्षेत्रं केदारः। चैत्रं भूमिकलत्रयोः॥ एवमन्येऽपि॥

भूवादिगृभ्यो णित्रन्॥ १७०॥

त्रिभ्यो धातुभ्यो णित्रन् स्यात्। णित्त्वाद्वृद्धिः॥ भावित्रं त्रैलोक्यम्॥ वादित्रं तूर्यादि॥ गारित्रमोदनम्॥

चरेर्वृत्ते॥ १७१॥

वृत्ते वाच्ये चरेर्णित्रन्॥ चारित्रं वृत्तम्। विनष्टचारित्रगुणा हितैषिण इति बालरामायणे॥ इत्रच्प्रत्यये चरित्रं वृत्तमेव। चरित्रव्यत्यासः सखि कथमयं कैकयकुल इति मुरारिः॥

अशित्रादिभ्य इत्रोत्रौ॥ १७२॥

अशू व्याप्तौ। एवमादिभ्य इत्रः स्यात्॥ अशित्रं चरुः। कट। कटित्रं चर्मभेदः॥ वहित्रं प्रसिद्धमेव॥ वधित्रं मन्मथः॥ धृञो धरित्री मही॥ त्रैङ् पालने। एवमादिभ्य उत्रः। आद्गुणः। पा० ६,१,८७,। त्रोत्रं प्रहरणम्॥ लोत्रं चोरचिह्नम्॥ वृञ्। वरुत्रं प्रावरणम्॥

अमेर्द्विषति चित्॥ १७३॥

अम गतौ॥ अत इत्रो भवति द्विषति वाच्ये। स च चित्॥ अमित्रः शत्रुः॥ इत्र एवानुवर्त्तते नोत्रोऽस्वरितत्वात्॥

आः समिण्निकषिभ्यां॥ १७४॥

इणः सम्पूर्वात्कषेश्च निपूर्वादाप्रत्ययः॥ समया निकषा समीपवाचकौ। स्वरादिपाठादव्यये। अभित इत्यादिना।

पा० २,३,२,१, । द्वितीया । समया ग्रामम् । निकषा ग्रामम् ॥ बाहुलकात् दिविदुषिभ्यां च । दिवा ॥ दोषा । स्वरादिपाठादव्यये । दिवातनम् । दोषातनम् । दिवाभूता रात्रिर्दोषाभूतमहरिति भाष्यम् । अस्य त्ववव्ययप्रतिषेधः । स्वभावादधिकरणस्वभावाविमाविति केचित् । दिवाह्नीत्यर्थे दोषा नक्तं च रजनाविल्यमरः ॥ तथा स्वदेर्धश्च । स्वधा पितृतृप्तिरित्यापिशलिः ॥

चितेः कणः कश्च ॥ १७५ ॥

चितेः कणप्रत्ययः कश्चान्तादेशः । बाहुलकादगुणः ॥ चिक्कणं मसृणं स्निग्धमित्यमरः ॥

सूचेः स्मन् ॥ १७६ ॥

सूच पैशुन्ये । चुरादिः ॥ अतः स्मन् णिलोपश्च । कुत्वादिकार्यम् । सूक्ष्ममल्पतरम् । कलौ सूक्ष्मतरो धर्मः ॥

पातेर्डुम्सुन् ॥ १७७ ॥

पा रक्षणे ॥ अतो डुम्सुन् स्यात् । डित्वात् टिलोपः । उकार उच्चारणार्थः । नकारः स्वरार्थः । पुंस् । स्वादिषु पुंसो ऽसुङ् । पा० ७,१,८९, । इत्यादिकार्यम् । पुमान् पुरुषः । पुमांसौ । पुमांसः । असुङ उकार उगित्कार्यः । उगितश्च । पा० ४,१,६, । इति ङीप् । सुपुंसी ॥ पुंसो ऽसुङ्ङित्यत्र न्यासरक्षिताभ्यां पुनातेर्मक् सुक् निन् ह्रस्वश्चेति सूत्रं पठित्वा पुमान् साधितः ॥

रुचिभुजिभ्यां किष्यन् ॥ १७८ ॥

आभ्यां किप्यन् स्यात्॥ रुचिष्यमिष्टम्॥ भुजिष्योदासः॥

**वसेस्तिः॥ १७९॥**

वसेस्तिः स्यात्॥ वस्तयः स्युर्दशासु वे। वस्तिर्नाभेरधो द्वयोरित्यमरः॥ बाहुलकात् शासः शास्ती राजप्रहारः॥ यजो यष्टिः। शुङ्गार्थोऽयमिति पशुपतिः॥ अस्यतेरस्तिः। अगेन सह कृद्योगषष्ट्याः समासः। शकन्ध्वादित्वात्पररूपत्वे विन्ध्याख्यमगमस्यतीत्यगस्तिः। अगस्तिनाध्यासितविन्ध्यशृङ्गम्। १२,७१,। इति भट्टिः॥ अस गत्यादौ। पुलं महत्त्वमसते गच्छतीति पुलस्तिः। तस्यापत्यं गर्गादित्वाद्यञ्। पौलस्त्य॥ एवं गभस्तिः॥ दूतिर्दूती च। त्वां कामिनो दूतिमुदाहरन्तीति वर्णविवेकः॥

**सावसेः॥ १८०॥**

अस भुवि॥ अतः सुशब्द उपपदे तिप्रत्ययः। बहुलवचनान्न भूभावः। स्वस्ति कल्याणम्। स्वरादिपाठादव्ययत्वम्॥

**वौ तसेः॥ १८१॥**

तसु उपक्षेपे॥ अतो विपूर्वात्तिः स्यात्। वितस्तिर्द्वादशाङ्गुलः। अम० २,६,२,३५,। स्त्रीपुंसयोर्वितस्तिः स्यादित्यमरमाला॥

**पदिप्रथिभ्यां नित्॥ १८२॥**

आभ्यां तिः स्यात्स च नित्॥ पत्तिः पदातिः॥ प्रथितिः प्रख्यातिः। तितुत्रेति सूत्रे ऽग्रहादीनामितीट्॥

दृणातेर्ह्रस्वश्च ॥ १८३ ॥

दृ विदारणे ॥ अतस्तिर्धातोर्ह्रस्वश्च । दृतिश्चर्मनिर्मित-पात्रमिति विश्वः । दृतिहरिः श्वा । मांसादष्टगुणा दृतिः ॥

कृतृकृपिभ्यः कीटन् ॥ १८४ ॥

एभ्यस्त्रिभ्यः कीटन् स्यात् ॥ इत्त्वादिकार्यम् । किरीटं मुकुटे न स्त्री किरीटं वेष्टनं मतमिति चन्द्रगोमी ॥ तिरीटं शिरोवेष्टनमित्युज्ज्वलदत्तः । लोध्रश्च ॥ कृपीटं कुक्षि-वारिणोः । बाहुलकादत्र लत्वाभावः । कृपेः रो लः इत्यत्र न्यासे कृतकृपिभ्यां चेति सूत्रं दृश्यते । अतस्तरतिरत्र ना-स्तीति लक्ष्यते ॥

रुचिवचिकुचिकुटिभ्यः कितच् ॥ १८५ ॥

चतुर्भ्य एभ्यो धातुभ्यः कितच् स्यात् ॥ रुचितं मिष्टम् ॥ उचितं युक्तम् ॥ कुचितं परिमितम् । कुटितं कुटिलम् ॥

कुटिकुषिभ्यां क्मलन् ॥ १८६ ॥

आभ्यां क्मलन् स्यात् ॥ कुट्मलं मुकुलम् । तारकादि-त्वात्कुट्मलितः ॥ कुष्मलं छेदनम् ॥

कुषेर्लश्च ॥ १८७ ॥

कुषधातोः क्मलन् स्यात् लश्चान्तादेशः । कुल्मलं पापम् ॥

सर्वधातुभ्योऽसुन् ॥ १८८ ॥

कृत्स्नेभ्यो धातुभ्योऽसुन् स्यात् । वर्चं दीप्तौ । वर्चः पुरीषम् ॥ रक्ष पालने । रक्षः कौणपः । प्रज्ञादित्वाद्राक्षसः । रुधिर । रोधस्तटौ ॥ चिती । चेतश्चित्तम् ॥ सृ गतौ ।

सरस्तडागः। गौरादित्वात्सरसी तु महासर इति शब्दार्णवः। अकारान्तोऽपि दृश्यते। निपातनं महासर इति न्यासे व्याख्यातम्। मतुप्। सरस्वानर्णवः। स्त्रियां सरस्वती नदीगिरोः। विनिरन्वानभिधानमिति भाष्यम्॥ रुदिर्। रोदः। गौरादित्वात् द्यावाभूमी च रोदस्याविल्यमरः। वी गतौ। वयः कालकृतावस्था। अर्थो न संभृतः कश्चिन्न विद्या काचिदर्जिता। न यशः सम्भृतं किंचिद्गतं च चतुरं वयः। प्रज्ञादित्वाद्वायसः काकः। यावादित्वाद्वायस्कः॥ षद्लृ विशरणे। सदः सभा। क्लीनपुंसकयोः सद इत्यमरः॥ इण्। अयो लोहम्। अयस्कान्तस्तु चुम्बकः। अयस्कान्तेन लोहवत्। कु २, ५९,। इति कालिदासः॥ अन प्राणने। अनो भक्तं तत्स्थानमपि। अनोऽस्यां महत्सम्पद्यते इति टच्। महानसं रसवती॥ तमु। तमः। तमसी। तमांसि। तमः क्लीवं गुणे क्लेशे सैंहिकेयान्धकारयोरिति रभसः। स्वर्भानुस्तु तमो राहुः सैंहिकेयो विधुन्तुद इत्यमरमालायां पुंस्काण्डे। अकारान्तोऽपि तमशब्दोऽस्ति। सत्यं वदन्ति तेऽकस्मादसत्यनीरसं तमा इति वर्णविवेकः। तथा च ज्योतिषे होरायाम्। भृगुतमबुधजीवैरिति। राहौ यथा कितवस्तमसेति वराहः॥ महतेरसुन्। महः। महसी। महांसि। अच्प्रत्ययेऽकारान्तोऽपि। न खलु दूरगतोऽप्यतिवर्तते महमसाविति बन्धुतयोदितेः। ६, १९,।

इति माघः। एवं महति महेऽस्मिन्निति कस्यचिदा-म्नस्य। गुणे ध्वान्ते तमो रात्रौ मह उत्सवतेजसोरिति दन्त्या न्ते रन्तिदेवः। स्वभावादेवासुनन्तो नपुंसकमिति केचित् सहतेरसुन्। मार्गशीर्षे सहाः। सहसौ। सहसः। सहो बलं च। सहसा वर्त्तते साहसिकश्चौरः। अच्प्रत्यये ऽका-रान्तोऽपि सहशब्दः। सहस्य प्रथमे चैव वाहयेत् दोषस-ञ्चयमिति चरके। मार्गशीर्षस्य सहस्येत्युक्तम्॥ तपतेस्तपः। तपसौ। तपांसि। तपा माघ इत्यमरे माघवाचो पुंल्लिङ्गः। तपसि मन्दगभस्तिरभीशुमान्। ६,६३,। इति माघः। अच्प्रत्यये ऽकारान्तोऽपि देवा विंशतिरेवैते सुरूपाः सुत-पाश्च त इति शब्दार्णवः। तपोपवासाध्ययनब्रह्मचर्यगतायु षामिति चरके। ग्रीष्मे तु अदन्त एव। तपेन वर्षाः शर-दा हिमागमः। १,६६,। इति माघः॥ माङ् माने। असुन्। माः। माःशब्दो मासि चन्द्रे च सम्मतो बहुदृश्व-नामित्युत्पलिनीकोशः॥

रपेरत एच्च॥ १८९॥

रपेरसुन्नत एच्च॥ रेपो ऽवद्यम्। रेपसी। रेपांसि। वि-रेपो ऽनवद्यम्॥ बहुलमन्यत्रापि। पिबतेरसुन्निकारश्चान्ता-देशः। पयः स्यात् क्षीरवारिणोः। अस्मायेति विनिः। पयस्वी। पयस्वान्। पयसस्तु विभाषयेति पयायते पयस्यते॥

अशेर्देवने युट् च॥ १९०॥

अश्नोतेरसुन्धातोर्युडागमश्च। देवने स्तुतौ॥ यशःकीर्त्तिः।

यशोधनानां हि यशो गरीय इति भारविः । विनिः । यशस्वी ॥

उब्जेर्बले बलोपश्च ॥ १९१ ॥

उब्ज आर्जवे ॥ अस्मात् बले ऽभिधेये ऽसुन् । बकारस्य लोपः । ओजो बलम् । ठक् । औजसिकः । क्यङ् । ओजायते ॥

श्वेः संप्रसारणं च ॥ १९२ ॥

श्वयतेरसुन्यातोः सम्प्रसारणं च ॥ शवो मृतकशरीरम् ॥ बाहुलकाद्वहेरप्यसुन् । सम्प्रसारणे कृते दीर्घत्वं धकारश्चान्तादेशः । ऊधस्तु क्लीवमापीनम् । अम० २,९,७३, । ऊधसो ऽनङ् । पा० ५,४,१३१, । बहुव्रीहेरूधसो ङीष् । पा० ४,१,२५, । कुण्डोध्नी ॥ घटोध्नी ॥

श्रयतेः स्वाङ्गे शिरः किच्च ॥ १९३ ॥

श्रियः स्वाङ्गे वाच्ये ऽसुन् कित्स्यात् । धातोः शिरादेशः ॥ शिरो मस्तकम् । शिरसी । शिरांसि । शिरशब्दो ऽकारान्तो ऽपि भारते दर्शितः । कुण्डलोद्घृष्टगण्डानां कुमाराणां तरस्विनां । निचकर्त्त शिरान् द्रौणिर्नालेभ्य इव पङ्कजान् । चकाह्नि पलितं शिरः । शिरः पलितं सर्वकाह्नि शोभस्वेत्यर्थ इति धि च । पा० ८,२,२५, । इत्यत्र सूत्रे वृत्तिः ॥

अर्तेरुच्च ॥ १९४ ॥

ऋ गतौ ॥ अतोऽसुन् कित्स्यात् धातोरुत्वं रपरत्वं च । उरो वक्षः । पिच्छिलादित्वादुरसिलः ॥

व्याधौ शुट् च ॥ १९५ ॥

अर्तेरेव व्याधौ वाच्ये ऽसुन् तस्य शुडागमश्च ॥ अर्शो गुदरोगः। अर्शआदित्वादच्। अर्शसः पुमान्। पृषोदरादित्वादस्लोप इति शोणितार्शौ सुखी भवेदिति विदेहाधिपः ॥

उदके नुट् च ॥ १९६ ॥

अर्तेरुदके वाच्ये ऽसुन् तस्य नुडागमश्च। रषाभ्यामिति णत्वम् ॥ अर्णः पानीयम्। तदस्यास्तीत्यर्णसः सलोपो वप्रत्ययश्च। अर्णवः समुद्रः ॥

इण आगसि ॥ १९७ ॥

इणोऽपराधे वाच्येऽसुन् तस्य नुडागमश्च ॥ एनः पापम्। एनोनिवृत्तेन्द्रियवृत्तिरेनं। ५,२३,। इति रघुः।

रिचेर्धने घित्किच्च ॥ १९८ ॥

रिचिर् ॥ अतो धने वाच्ये ऽसुन्। स च घित्किच्च स्यात्। प्रत्ययस्य नुट्। रिक्णः सुवर्णम् ॥

चायतेरन्ने ह्रस्वश्च ॥ १९९ ॥

चायृ पूजादौ ॥ अतो अन्ने वाच्ये ऽसुन् तस्य नुट् च। धातोर्ह्रस्वत्वं च। चनो भक्तम् ॥

वृङ्शीङ्भ्यां रूपाङ्गयोः पुट् च ॥ २०० ॥

वृङ्शीङ्भ्यां यथाक्रमं रूपाङ्गयोरभिधेययोरसुन् तस्य पुडागमश्च ॥ वर्पो रूपम्। शेपो गुह्यावयवः। शेपः स्याद्वृषणं पेलमिति सुभूतिचन्द्रः। शेपसी। शेपांसि। अश्रा-

रान्तो ऽपि शेपशब्दो मेढ्रवाची विद्यत इति षष्ट्या आक्रोशे। पा० ६, ३, २१,। इत्यत्र रचितः। शुन इव शेपोऽस्य। शुनःशेपो मुनिः। तत्रैव फ चेति केचित्पठन्ति। तेषां वर्फः शेफ इति देशना।

स्रुरीभ्यां तुट् च॥ २०१॥

स्रु गतौ। रीङ् स्रवणे॥ आभ्यामसुन् तस्य तुट् च। स्रोतोऽम्बुसरणं स्रुतः। अम० १,२, ३.११,। बाहुलकाद्दकारान्तोऽपि। तेन स्रोतो महानिति वर्णविवेकः॥ रेतः शुक्रम्॥

पातेर्बले जुट् च॥ २०२॥

पा रक्षणे॥ अतो बले वाच्येऽसुन् जुडागमश्च। पाजो बलम्।

उदके थुट् च॥ २०३॥

पातेरेवोदके वाच्ये ऽसुन्। तस्य थुडागमः॥ पाथो जलम। पाथोनिधिः कुसुमचापभृतो विकारः॥

अन्ने च॥ २०४॥

अन्ने वाच्ये पातेरसुन् तस्य थुट् च। पाथो भक्तम॥

अदेर्नुम्धौ च॥ २०५॥

अदेर्भक्ते वाच्येऽसुन् नुम्धौ चागमान्तादेशौ॥ अन्धो ऽन्नमोदनो भिस्सेत्यमरः। द्विजातिशेषेण यदेतदन्धसा। १, ३९,। इति भारविः॥

स्कन्देस्स स्वाङ्गे॥ २०६॥

स्कन्दिर् ॥ अतः स्वाङ्गे वाच्येऽसुन्धकारश्चान्तादेशः । स्कन्धः शरीरावयवः । स्कन्धशब्दोऽकारान्तोऽप्यस्ति ।

आपः कर्माख्यायां ह्रस्वस्तुट् च वा ॥ २०७ ॥

आप्नोतेः कर्माख्यायामसुन् ह्रस्वश्च धातोः । प्रत्ययस्य तुडागमः । अप्नः । अपः । आप इत्यपि । आपोमयम् । आपोभिर्मार्जनं कृत्वा । यज्ञकर्मनाम ॥

रूपे जुट् च ॥ २०८ ॥

आप्नोतेः रूपे वाच्येऽसुन् ह्रस्वत्वं च धातोर्जुट् च प्रत्ययस्य । अज्ञो रूपम् ।

उदके नुम्भौ च ॥ २०९ ॥

आप्नोतेरेवोदके वाच्येऽसुन् ह्रस्वत्वं च नुमागमो भश्चान्तादेशः । अम्भ उदकम् । अलक्ष्यम्भसाकृतम् । अम्भसा वर्तते । आम्भसिको मत्स्यः ।

नहेर्दिवि भश्च ॥ २१० ॥

नहेर्गगने वाच्ये ऽसुन् भश्चान्तादेशः । नभो गगनम् । नभस्यः ॥

इण आगोऽपराधे च ॥ २११ ॥

एतेरपराधे वाच्ये ऽसुन् । धातोरागादेशः ॥ आगोऽपराधदण्डयोः । आगः पापापराधयोरित्यमरः । मदीये हृदये नूनं सखि नागो न विद्यते । वन्दति सर्पं सर्पेति किं नालिङ्गसि मामिति ॥

अमेर्ह्रुक् च ॥ २१२ ॥

अमेरसुन् हुगागमश्च धातोः । अमन्ति गच्छन्त्यनेनाधस्तादित्यंहः पापम् ॥

रमेश्च ॥ २१३ ॥

रमेरसुन् हुगागमश्च धातोः ॥ रंहो वेगः । अहिरहिभ्यामसुनित्यंहो रंह इति धातुप्रदोपः । अहिरहिभ्यामसुनिति सिद्धे ऽधिरविभ्यामसुन्यङ्हो रङ्ह इति मा भूदिति सूत्रद्वयमिति गोवर्धनः । शीघ्रमङ्हाविज्ञातं । ६, । रङ्हः सङ्हः सुराणां । ७१,। इति सूर्यशतके घकारानुप्रासरसिकानां प्रमादः ॥

देशे ह च ॥ २१४ ॥

रमतेर्देशे वाच्ये ऽसुन् हकारश्चान्तादेशः ॥ रमन्ते ऽस्मिन्निति रहो विश्वासदेशः । देशादन्यत्र रहो ऽव्ययं शब्दान्तरं वास्ति सुरतवाचकम् । दिगादित्वाद्रहस्यम् । रहस्यं तद्भवे लिङ्गु । अम० २,८,१,२३,॥ रह त्यागे । अस्मादसुनि रह इति धातुप्रदीपः ॥

अञ्च्यञ्जियुजिभृजिभ्यः कुश्च ॥ २१५ ॥

अञ्चु । अनजू । युजिर् । भृजी ॥ एभ्यो ऽसुन् कवर्गश्चान्तादेशः । अङ्कश्चिह्नशरीरयोः ॥ अङ्गः पक्षी ॥ योगः समाधिकालयोः ॥ भर्गः प्रजापतिः । इमानि स्वभावान्नपुंसकानि ॥ बाहुलकादुच्यतेरप्यसुन् । कुत्वं गुणः । ओकः स्थानम् । अदन्तो ऽप्योकशब्दो ऽस्ति । दिवौकसो जलौकस इति । उणादयो बहुलमिति कुत्वम् ॥

भूरञ्जिभ्यां कित्॥ २१६॥

भू सत्तायाम्। रञ्ज रागे॥ आभ्यां धातुभ्यामसुन् कित्स्यात्। भुवो ऽन्तरिक्षम्। षष्ठ्यन्तप्रतिरूपकमव्ययमिति॥ रजो रेणुर्गुणश्च। अकारान्तो ऽपि रजशब्दो ऽस्ति। रजो ऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु। रादि० ८,। इत्यजयकोशः। अतो ऽर्थाः पादरजोपमा इति सुखसाधितम। सर्वस्वे तु रजः करोति रजयति। ततः पचाद्यचि पादरजोपमा इति साधितम्॥

वसेर्णित्॥ २१७॥

वसेरसुन् णिद्भवति। वासो वस्त्रम्॥

चन्देरादेश्च छः॥ २१८॥

चन्दतेरसुन्। आदेश्चकारस्य छकारः॥ छन्दो गायत्र्यादिः कपटं च। इच्छावाच्यपि छन्दः। यथा हि छन्दसा वचसां प्रवृत्तिरिति स्वरितेनाधिकारः। पा० १,३,११,। इत्यत्र सूत्रे न्यासः। अकारान्तो ऽपि छन्दः। छन्दानुवृत्तिदुःसाध्याः सुहृदो विमनीकृताः। २,१०५,। इति माघः। अभिप्रायवशौ छन्दावित्यमरः॥

पचिवचिभ्यां सुट् च॥ २१९॥

आभ्यामसुन्। तस्य सुडागमः। पचसौ तु स्मृतौ पक्षावित्युत्तररत्नम्॥ वक्षो हृदयम्। वक्ष रोष इत्यतो ऽसुनि वक्ष इति धातुप्रदीपः॥

वहिहाधाञ्भ्यश्छन्दसि॥ २२०॥

वह । ओहाक् । डुधाञ् ॥ एभ्यो ऽसुन् छन्दसि तस्य नुट् च ॥ वद्या अनड्वान् ॥ हासाश्चन्द्रः ॥ धासाः पर्वतः ॥

इण आसिः ॥ २२१ ॥

एतेरासिः स्यात् ॥ अया वह्निः । स्वरादि[illegible]ठादव्ययम् । अत एव दीर्घादिः प्रत्ययः ॥

मिथुनेऽसिः पूर्ववच्च सर्वम् ॥ २२२ ॥

यत्रोपसर्गौ धातुक्रियया युक्तस्तन्मिथुनम् । तत्र धातोरसिः स्यात्पूर्ववच्च सकलं कार्य्यम् ॥ पिबतेरिच्च । सुपयाः स्त्रीपुंसयोः ॥ सुपेशाः ॥ एवं न्योजाः सुजवाः सुस्रोता इत्यादयो ऽपि द्रष्टव्याः । पूर्ववदिति वचनादित्वादिकम् । प्रत्ययान्तरकरणं स्वरार्थम् ॥

नञ्याङ्हन एह च ॥ २२३ ॥

आङ्पूर्वाद्धन्तेर्नञ्युपपदे ऽसिः स्याद्धातोरेहादेशश्च । सावनङादिकार्थ्यम् । नाहते । अनेहा कालः । अनेहसौ । अनेहसः ।

विधाञो वेध च ॥ २२४ ॥

डुधाञो विपूर्वादसिः स्याद्विधादेशश्च सोपसर्गधातोः । विदधातीति वेधा विधाता । विदुष्यपि स्मृतो वेधाः । २५८, । इति हारावली ।

नुवो धुट् च ॥ २२५ ॥

नौतेरसिस्तस्य धुट् च । नोधा ऋषिः ।

गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वम् ॥ २२६ ॥

प्रादिच्विडाचो गतिसञ्ज्ञाः। गतौ कारके चोपपदे ऽसिः स्यात्। पूर्वपदप्रकृतिस्वरत्वम्। सुतपाः। सुतेजाः। सुवचाः। कारके। उग्रतेजाः। हिरण्यरेताः। जातवेदाः। सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः। अम० २,७,८,। विष्टरे ऽश्वत्थवृक्षे श्रूयते नित्यं तत्र वसतीति विष्टरश्रवाः। तथा वृद्धेभ्यः शृणोति वृद्धश्रवा इन्द्रः। गतिकारकोपपदात्कृत्। पा० ६,२,१३९,। इत्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते वचनमिदमारभ्यते।

चन्द्रे मो डित् ॥ २२७ ॥

चन्द्रोपपदान्माङो ऽसिः। स च डिद्भवति। चन्द्रमाः। चन्द्रमसौ। चन्द्रमसः। बाहुलकात्केवलादपि मो ऽसिः। मीयन्ते ऽनेनेति माः। मासौ। मासः। पूर्णो माः। तस्येयं पौर्णमासी।

वयसि धाञः ॥ २२८ ॥

डुधाञो वयस्युपपदे ऽसिर्डिद्भवति। वयोधास्तरुणः।

पयसि च ॥ २२९ ॥

पयःशब्दे चोपपदे डुधाञो ऽसिः स्यात् स च डिद्भवति। पयोधाः समुद्रो मेघविशेषश्च।

पुरसि च ॥ २३० ॥

पुरः पूर्वाद्धाञोऽसिर्डिद्भवति। पुरोधास्तु पुरोहित

इत्यमरः। वयःपयःपुरःसु धाञ इत्येकयोगे कर्तव्ये सूत्रत्रयं वैचित्र्यार्थम्।

पुरूरवाः॥ २३१॥

अयं शब्दो निपात्यते। पुरुशब्दाद्रौतेरसिः। पूर्वपददीर्घत्वम्। पुरूरवा बुधसुतो राजर्षिश्च। पुरूरवसौ॥ पुरूरवसः।

चक्षेर्बहुलं शिच्च॥ २३२।

चक्षिङो ऽसिर्बहुलं शिच्च भवति॥ अचचा उपाध्यायः। नृचक्षा राक्षसः॥ शित्त्वाभावपक्षे ख्याञादेशः। आख्याः प्रख्याः प्रजापतिः॥

उषः कित्॥ २३३॥

अतो ऽसिः किद्भवति। कित्त्वान्न गुणः॥ उषः। प्रत्युषः। श्रुत्वा प्रत्युषसि प्रयाणपटहं प्रोत्कम्पमानोत्थिता। प्रत्युषः पारिजाते। ४२,। इति सूर्य्यशतके॥ कर्णरन्ध्रे ऽप्युषः प्रोक्तं तथा मलयपर्वते। कर्णरन्ध्रे। उषःसु लग्नाश्रवणे ऽधिकां श्रियं प्रचक्रिरे नूतनपल्लवा इव। मलये यथा। उषस्तरोः परशुशिखाभेदनम्। अहरादीनां च पत्यादिषूभयथा। पा०८,२,७०,२,। उषसि बुध्यते। उषर्बुधो ऽग्निर्बालश्च। कप्रत्यये टाप्युषा। उषा रात्रिस्तदन्ते च बाणस्यापि सुता तथेति वाचस्पतिः॥

दमेरुनसिः॥ २३४॥

दाम्यतेरुनसिः॥ दमुनाः शुक्रश्चित्रभानुर्विभावसुरित्यमरः॥

अङ्गिराः ॥ २३५ ॥

अयं शब्दो निपात्यते ॥ अङ्गतेरसिः । इरुडागमः । अङ्गिरा ऋषिभेदः । तस्यापत्यमाङ्गिरसः ॥

अप्सराः ॥ २३६ ॥

अयं शब्दो निपात्यते ॥ सर्तेरपपूर्वादसिः । अप्सरस उर्वशीमुखाः । अपि सर्तेरसुन्निति सर्वस्वम् । अप्सु मध्यमाणासु जाता इत्यप्सरसः । एकाप्सरःप्रार्थितयोर्विवाद इति रघुः । ७,५०, ॥

विदिभुजिभ्यां विश्वे ॥ २३७ ॥

विद ज्ञाने । भुज पालनादौ ॥ आभ्यां विश्वोपपदाभ्यामसिः । तस्य तत्पुरुषे कृतीति सप्तम्या अलुक् । विश्वेवेदा अग्निः ॥ विश्वेभोजा इन्द्रः ॥

वशेः कनसिः ॥ २३८ ॥

वश कान्तौ ॥ अतः कनसिः । सम्प्रसारणादिकार्यम् । उशना भार्गवः कविरित्यमरः । उशना वेद यच्छास्त्रं बृहस्पतिस्वभावादेव तत्सर्वं स्त्रीबुद्धौ सम्प्रतिष्ठितम् ॥

॥ इति महोपाध्यायश्रीमदुज्ज्वलदत्तविरचितायामुणादिवृत्तौ चतुर्थः पादः ॥४॥

---

अदि भुवो डुतच् ॥ १ ॥

भवतेरच्छब्द उपपदे डुतच् स्यात् । डित्वात् टिलोपः ॥ अद्भुतमाश्चर्यम् । न विद्यते यद्यपि पूर्ववासना गुणानुबन्धि-प्रतिभानमद्भुतम् । श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम् ॥ अद्भुतमधीते । अद्भुताध्यापकः । भ्रपूर्व्य सकारादित्वात् ॥

गुधेरूमः ॥ २ ॥

गुध्यतेरूमः स्यात् ॥ गोधूमः सुमनः समौ । अम० २,६,१८, । बिल्वादित्वाद्गौधूमः ॥

मसेरूरन् ॥ ३ ॥

मस्यतेरूरन् स्यात् ॥ मसूरो व्रीहिकाञ्चनः । १८२, । इति हारावली । स्त्रियां टाप् । वेश्यायां व्रीहिभेदे च मसूरा मसुरा स्त्रियामिति हट्टचन्द्रः ॥ बिल्वादित्वान्मा-सूरः ॥

स्थः किच्च ॥ ४ ॥

तिष्ठतेरूरन् कित्स्यात् । कित्वादालोपः ॥ स्थूरो मनु-ष्यः । गर्गादित्वात्स्थौर्यः ॥

पातेरतिः ॥ ५ ॥

पातेरतिः स्यात् ॥ पतिः-स्वामी । सम्पूर्वात्सम्पातिः पक्षिराजः ॥

वातेर्नित् ॥ ६ ॥

वातेरतिर्नित्स्यात् ॥ वातिरादित्यसोमयोरिति रभसः ॥

अर्तेश्च ॥ ७ ॥

ऋ गतौ ॥ अस्मादतिः स्यात्स च नित् । अरतिरुद्वेगः ॥

तृहेः क्नो हलोपश्च ॥ ८ ॥

तृह हिंसि हिंसायाम् ॥ अतः क्नो हकारलोपश्च । तृणं प्रसिद्धम् । पाशादित्वात्तृण्या घटादित्वात्तृणमयम् । तृणे जातौ कडादयः । कत्तृणं तृणजातिः स्यात् । रेफकारसंयुक्तमव्युत्पन्नं शब्दान्तरमप्यस्ति । उत्क्षिप्तनिखपल्लवांशुविहगः सौख्यस्तनः पूजित इति वराहः ॥

कृञ्लुटितनिताडिभ्य उलन् तण्डश्च ॥ ९ ॥

तड आघाते ॥ एभ्य उलन् तण्डादेशश्च धातोः । क्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्ते तण्डुलाः प्रसिद्धाः । तण्डुलाः । ४,१०७, । इत्येते ऽपि यथा स्युरिति ॥

दंसेष्टनौ न आत् ॥ १० ॥

दसि दंशनदर्शनयोः ॥ अतष्टनौ स्यातां नकारस्य चाकारः । दासः सेवकशूद्रयोः । स्त्रियां ङीप् । दासी चेटिका । षष्ठ्या आक्रोश इत्यलुक् षष्ठ्याः । दास्याःसदृशो ॥

दंशेश्च ॥ ११ ॥

दंश दशने ॥ अस्मादपि टटनौ नकारस्य चात्वम् । दशति मत्स्यानिति दाशो धीवरः । स्त्रियां दाशी धीवरी ॥

उदि चेडैसिः ॥ १२ ॥

उत्पूर्वाच्चिनोतेर्डैसिः स्यात् । डित्वात् टिलोपः । स्वरादिपाठादव्ययम् । उच्चैर्महान् ॥

नौ दीर्घश्च ॥ १३ ॥

निपूर्वाच्चिनोतेर्डैसिः । निशब्दस्य दीर्घत्वम् । नीचैरमहान् ॥

सौ रमतेः क्तो दमे पूर्वपदस्य च दीर्घः ॥ १४ ॥

रमतेः सुपूर्वात् दमे ज्ञाने वाच्ये क्तः सुशब्दस्य च दीर्घः ॥ कित्वादनुनासिकलोपः ॥ सूरत उपशान्तः कृपालुश्च । दमादन्यत्र सुरतः क्रीडायुक्तः ॥

पूङो यणुक् ह्रस्वश्च ॥ १५ ॥

पवतेर्यत् णुगागमश्च ह्रस्वत्वं च धातोः ॥ पुण्यं सुकृतधर्मयोरिति चन्द्रः । अहःसर्वैकदेश इति । पा० ५,४,८७, । अच् । पुण्यरात्रः ॥

स्रंसेः शि कुट् किच्च ॥ १६ ॥

स्रंसतेर्यत्किद्वत्ति । तस्य कुडागमश्च । धातोः शिरित्ययमादेशः ॥ शिक्यं काच इत्यमरः । तत्राहितं शैक्यम् ॥

अर्तेः क्यरुच्च ॥ १७ ॥

अर्तेः क्यच्प्रत्ययो धातोरुत्वं रपरत्वं च । योरनः । उरणो मेषवाचकः ॥

हिंसेरीरन्नीरचौ ॥ १८ ॥

हिसि हिंसायाम् ॥ अस्मादीरन्नीरचौ स्याताम् । हिंसीरो व्याघ्रदुष्टयोः । प्रत्ययद्वयोपादानं स्वरार्थम् ॥

उदि दृणातेरजचौ पूर्वपदान्त्यलोपश्च ॥१९॥

दृ विदारणे॥ अस्मादुत्पूर्वादल् अच् इत्येतौ प्रत्ययौ स्यातां पूर्वपदान्त्यलोपश्च। उदरं कुक्षिः। पृषोदरः॥ पृषोदरं मेदुरं पृषदिति भागवृत्तिः। दुरोदरः पाशके। आश्रित्य दुर्गं गिरिकन्दरोदरं क्रोडन्त्यमुष्मिन्सततं दरोदरं। देवद्विषं धर्यविधूतवासवा दारैः समानं रक्षितार्तवासवा इति यमकात् दरोदरो निरुक्तार इति गोवर्धनः। तुन्दादित्वादुदरिलः। उदरात् ठगाद्यूने। पा० ५,२,६७,। औदरिकः,। फलेग्रहीति। पा० ३,२,२६,। चकारादुदरम्भरश्चकोरा इति सुरारिः। दामन्युदरमस्य। दामोदरः। संज्ञैषा तत्रभवत इति पारायणम्। अत्रापि पूर्ववदुभयोपादानं स्वरार्थम्॥

डित्खनेमुट्चोदात्तः॥ २०॥

खनतेरलचौ। तयोर्डित्वम्। धातोर्मुडागमः। तस्योदात्तत्वं च। आगमो मकारः श्रुत्यर्थ एव॥ मुखमास्यम्। दिगादित्वात्तत्र भवे यत्। मुख्यं। शाखादित्वान्मुखमिव मुख्यम्। प्रजाः सृजा यतः खातं तस्मादाहुर्मुखं बुधा इति॥

अमेः सन्॥ २१॥

अम गतौ॥ अस्मात्सन्। अंसस्कन्धविभागयोः। वत्सांसाभ्यां कामबले। पा० ५,२,९८,। इति लच्। अंसलः। अंसं हारी। पा० ५,२,६९,। इति कन्। अंसको दायादः। उत्सादिषु वृषदंश इति पाठादञ्। वार्षद आंशः। वृषान्

दन्दशीति । कर्मण्यण् । पा० ३,२,१, । इषदंशः । उत्सादिषु समुदायादञिति केचित् । वार्षदंशः । एवं च विभागभाव्यंशशब्दस्तालव्यशकारवानपि ॥

मुहेः खो मूर् च ॥ २२ ॥

मुहेः खप्रत्ययः । धातोर्मूरादेशः ॥ मुह्यतीति मूर्खः प्रसिद्ध एव । दृढादित्वान्मौर्ख्यम् । पृथ्वादित्वान्मूर्खिमा । बाहुलकाद्दीनादेशः खस्य न स्यात् ॥

नहेर्हलोपश्च ॥ २३ ॥

णह बन्धने ॥ अतः खो हलोपश्च । नखः प्राण्यङ्गम् ॥

शीङो ह्रस्वश्च ॥ २४ ॥

शीङः खप्रत्ययो धातोर्ह्रस्वत्वं च । ह्रस्वविधानसामर्थ्याद्गुणाभावः ॥ शिखा शिखण्डिनां चूडा शिखा ज्वालापि कीर्त्तिता । व्रीह्यादित्वात् शिखावान् सञ्चारिणी दीपशिखेव रात्रौ । ६,६७, । इति रघुः ॥

माङ ऊखो मय च ॥ २५ ॥

माङ् माने ॥ अस्मादूखप्रत्ययो मयादेशश्च धातोः ॥ मयूखः किरणः । मयूखस्त्विट्करज्वालास्वित्यमरः ॥

कलिगलिभ्यां फगस्योच्च ॥ २६ ॥

कल संख्याने । गल अदने ॥ आभ्यां फक्प्रत्ययः । धातोरकारस्योत्वम् । कुल्फः शरीरावयवो रोगश्च ॥ गुल्फः पादग्रन्थिः ॥

स्फायः स्वण्भुनौ पृ च ॥ २७ ॥

स्पृश संस्पर्शे॥ अतः श्वण्शुनौ प्रत्ययौ भवतो धातोश्च पृ इत्ययमादेशः॥ पार्श्वा ऽस्त्री कक्षयोरध इत्यमरः॥ पर्शु-रायुधम्॥

**श्मनि श्रयतेर्डुन्॥ २८॥**

श्मन्शब्दो सुखवाचीति स्मृतिः। श्मन्युपपदे श्रयतेर्डुन्। डित्वात् टिलोपः। सुखमाश्रयत इति श्मश्रु। श्मश्रुणी। श्मश्रूणि। श्मश्रु पुंमुखरोमणीत्यमरमाला। आहिताग्न्या-दित्वात् जातश्मश्रुः श्मश्रुजातः। सिध्मादित्वात् श्मश्रुलः॥

**अश्वादयश्च॥ २९॥**

अश्नोतेर्डुन् रुट् च॥ अश्रु नयनजलम्। एवमन्ये ऽपि यथाप्रयोगमूहनीयाः॥

**जनेष्टन् लोपश्च॥ ३०॥**

जनी प्रादुर्भावे॥ अतष्टन्प्रत्ययो भवत्यन्त्यलोपश्च धातोः। जटा लग्नकचे मूल इत्यमरः। बाहुलकान्नेत्संज्ञा। सिध्मा-दित्वाज्जटालः। पिच्छिलादित्वाज्जटिलः॥

**अच् तस्य जङ्घ च॥ ३१॥**

तस्य जनेरच्प्रत्ययो जङ्घादेशश्च धातोः॥ जङ्घा प्रसि-द्धैव॥

**हन्तेः शरीरावयवे द्वे च॥ ३२॥**

देहावयवे वाच्ये ऽच्प्रत्ययो द्वित्वं च धातो । अभ्यास-कार्यम्। अभ्यासाच्च। पा० ७,३,५५, । इति कुत्वम्॥ जघ-नमुपस्थोपरिभागः। पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु

जघनं पुर इत्यमरः । इवार्थं शाखादित्वाद्यः । जघन्यं गर्हितार्थकमिति शाश्वतः ॥

क्लिशेरन् लो लोपश्च ॥ ३३ ॥

क्लिश्नातेरन्प्रत्ययो लकारलोपश्च ॥ केशः कचः । केशाद्वो ऽन्यतरस्याम् । पा० ५,२,१०९, । केशवः । केशिकः । केशी ॥

फलेरितजादेश्च पः ॥ ३४ ॥

फलेरितच्प्रत्ययः । आदेः फकारस्य पकारः । पलितं केशपाकः ॥

कृञादिभ्यः संज्ञायां वुन् ॥ ३५ ॥

एभ्यः संज्ञायां वुन् ॥ करकः करका वृष्टिपाषाणे । नेत्वं क्षिपकादिपाठात् । करको दाडिमे ख्यातः करकः खारकमण्डलौ ॥ कटे वर्षादौ । कटको ऽस्त्री वलये सानौ ॥ नॄ नये । नरकं पापस्थानम् । नरको नारको ऽपि चेति द्विरूपकोशः ॥ सृ । सरकं गमनम् । अलज् भूषादौ । अलकाश्चूर्णकुन्तला इत्यमरः । अलकं क्लीबमपि । हस्ते लीलाकमलमलकं । ६६, । इति मेघदूतः । स्वभाववक्राण्यलकानि तासामिति भारविः ॥ कुर शब्दे । कोरकः । कलिका कोरकः पुमानित्यमरे प्रमादः । यतः क्लीबे ऽपि दृश्यते । विचकार कोरकाणि । ७,२६, । इति माघे नपुंसकत्वात् ॥

चीकयतेराद्यन्तविपर्ययश्च ॥ ३६

कीचको वंशभेदः ॥

**पचिमच्योरिच्च ॥ ३७ ॥**

पेचकः ॥ मेचकः ॥

**जनेररष्ठ च ॥ ३८ ॥**

अस्मादरप्रत्ययष्ठश्चान्तादेशः ॥ जठरमुदरम् । जठरं कठिनेऽपि स्यादित्यमरः ॥

**वचिमनिभ्यां चिच्च ॥ ३९ ॥**

वच । मन ॥ आभ्यामरश्चित्स्यात् ठश्चान्तादेशः । वठरो मूर्खः ॥ मठरो मुनिशौण्डयोः । विदादित्वान्माठरः । गर्गादित्वान्माठर्यः ॥

**ऊर्जि दृणातेरलचौ पूर्वपदान्त्यलोपश्च ॥ ४० ॥**

दॄ विदारणे ॥ अत ऊर्ज्युपपदे ऽलचौ भवतः पूर्वपदान्त्यलोपश्च । ऊर्दरः सूररक्षसोः । स्वरभेदार्थं प्रत्ययद्वयम् ॥

**कृदरादयश्च ॥ ४१ ॥**

कृदरादयो ऽच्प्रत्ययान्ता निपात्यन्ते ॥ कृदरः कुशूलः । मृदरो व्याधिर्बिलं च ॥ सूदरः सर्पः ॥

**हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे ॥ ४२ ॥**

हन्तेर्युन्प्रत्ययः । आदावन्ते च यथाक्रमं घत्वतत्वे भवतः । घतनो मारकः ॥

**क्रमिगमिक्षमिभ्यस्तुन्वृद्धिश्च ॥ ४३ ॥**

क्रमु । गमॢ । क्षमूष् ॥ एभ्यस्तुन् एषां वृद्धिश्च । क्रान्तुः

पच्चो॥ गान्तुः पथिकः। पथिक इह गान्तुर्गन्तुगातू च गातुरिति वर्णविवेकः। आङ्पूर्वादागान्तुरभ्यागतः॥ चान्तुर्मर्षकः॥

हर्यतेः कन्यन् हिर च॥ ४४॥

हर्य गतिकान्त्योः॥ अतः कन्यन्प्रत्ययो हिरादेशश्च धातोः। हिरण्यं सुवर्णम्॥

कृञः पासः॥ ४५॥

करोतेः पासप्रत्ययः॥ कर्पासः सस्यभेदः स्यात्। यस्य तु गुल्फस्य तत्सत्वं सस्त्रीलिङ्गो वनौषधिवर्गे पठितः। कर्पासी वदरेति च। अम० २,४,४,४,। बिल्वादित्वात् कार्पासं वस्त्रं परिधत्ते॥

जनेस्तु रश्च॥ ४६॥

अतस्तुप्रत्ययो रेफश्चान्तादेशः॥ जर्तुः स्याद्योनिर्हस्तिनोः॥

ऊर्णोतेर्डः॥ ४७॥

ऊर्णुञ्॥ अतो डप्रत्ययः। डित्वात् टिलोपः। ऊर्णा मेषस्य रोमाणि। ऊर्णायुरिष्यते मेष ऊर्णायुर्मेषकम्बलः। मृदुत्वादूर्णेव नाभिरस्येति ङ्यापोरिति। पा० ६,२,६२,। ह्रस्वत्वम्। अच्प्रकरणे नाभेरुपसंख्यानमित्यच् ऊर्णनाभः। साधनेन विना सृष्टिरूर्णनाभेरपोष्यते। न च निःसाधनः कर्ता कश्चित्सृजति किं चन। अतोऽर्णनाभिरिति चिन्त्यम्।

दधातेर्यत् नुट् च॥ ४८॥

डुधाञ्॥ यत्प्रत्ययः। तस्य नुडागमश्च। दधाति

पुष्णाति लोकानिति धान्यं व्रीहिः। धान्यानि मधुरसम्पन्नानीति स्मृतिः। कलिङ्गे तु धाने पोषणे साधुरिति तत्र साधुः। पा० ४,४,९८,। इति वला धान्यशब्दो व्युत्पादितः॥

जीर्यतेः क्रिन् रश्च वः ॥ ४९ ॥

जॄ वयोहानौ॥ अतः क्रिन्प्रत्ययः। धातो रेफस्य वत्वम्। इत्वादिकार्य्यम्। जिव्रिः स्यात्कालपक्षिणोः। हलि चेति न दीर्घो बहुलवचनात्॥

मव्यतेर्यलोपो मश्चापतुट् चालः ॥ ५० ॥

मव्य बन्धने॥ अस्मादालप्रत्ययः। धातोर्यकारस्य लोपो मश्रा (स्यान्त्यस्य प्रत्ययस्य चापतुडागमः। ममापतालो विषये स्यात्॥

ऋजेः कीकन् ॥ ५१ ॥

ऋज गतौ॥ अतः कीकन्। ऋजीका इन्द्रधूमयोः॥

तनोतेर्डउः सन्वच्च ॥ ५२ ॥

तनोतेर्डं उप्रत्ययः। सन्वदस्य कार्यम्। अभ्यासस्येत्वादिकार्यम्। डित्वात् टिलोपः। पृथगुच्चारणबलाद्गुणो न भवति॥ तितउश्चालनी स्मृता। तितउ छत्रम्। चालनी तितउः पुमानित्यमरे प्रमादः। तितउ। तितउनी। तितउनि। तितउनीति प्रयोगाणां रामदासादौ दृष्टत्वात्। चालनं तितउन्युक्तमिति कोशान्तरम्॥

अर्भकपृथुकपाका वयसि ॥ ५३ ॥

एते वयसि निपात्यन्ते ॥ ऋधु-वृद्धौ । अतो वुन् भकारश्चान्तादेशः । अर्भकः ॥ प्रथ प्रख्याने । अतः कुकन् संप्रसारणं च । पृथुकः ॥ पिवतेः कन् । पिवतीति पाकः ॥ वालकपर्याया अमी ॥

अवद्यावमाधमार्वरेफाः कुत्सिते ॥ ५४ ॥

एते निपात्यन्ते कुत्सिते ॥ वदेर्नञि यत् । अवद्यम् ॥ अवतेरमः । अवमम् ॥ तत्रैव वकारस्य धकारः । अधमम् ॥ ऋ गतौ । अतो । वन् । अर्वा ॥ रिफतेस्तौदादिकादकारप्रत्ययः । रेफः ॥ कुत्सितपर्याया अमी ॥

लीङ्रीङो ह्रस्वश्च पुट् च तरौ श्लेषणकुत्सितयोः ॥ ॥ ५५ ॥

लीङ् श्लेषणे । रीङ् श्रवणे ॥ आभ्यां त र इत्येतौ प्रत्ययौ यथाक्रमं श्लेषणकुत्सितयोरर्थयोः । धातोर्ह्रस्वत्वं पुडागमश्च प्रत्ययस्य ॥ लिप्तं श्लिष्टम् ॥ रिप्रं कुत्सितम् ॥

क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च । ॥ ५६ ॥

क्लिशू विबाधने ॥ अतः कन् । धातोरुपधाया ईत्वम् । लकारस्य लोपो नामागमश्चान्त्यस्य । कीनाशः कर्षको यम इत्यजयकोशः । विधेहि कीनाशनिकेतनातिथिं । १,७२, । इति माघः । ककारानुबन्धस्य फलं न दृश्यते ॥

अश्नोतेराशुकर्मणि वरट् च ॥ ५७ ॥

अशू व्याप्तौ ॥ अस्मादाशुकर्मणि वरट् । चकाराद्

पधाया ईत्वम्। ईश्वरः स्वामिशूलिनोः। ईश्वरी स्वामिनी दुर्गा च। स्थेशभासेति। पा० ३,२,१७५,। वरचीश्वरेऽप्यपि भवति। ईश्वरः शङ्करे प्रोक्तः पार्वत्यामीश्वरी चेति शब्दार्णवः। विन्यस्तमङ्गलमहौषधिरीश्वरायाः। ५,३३,। इति भारविः।

**चतेरुरन्॥ ५८॥**

चते याचने॥ अस्मादुरन्प्रत्ययः। अकार उच्चारणार्थः। चतुः संख्यावाचकः। चतुरनडुहोरामुदात्तः। पा० ७,१,९८,। इत्याम्। चत्वारः। चत्वारि। त्रिचतुरोः स्त्रियामिति। पा० ७,२,९९,। चतस्रः॥

**प्राततेररन्॥ ५९॥**

अस्मात् प्रपूर्वादरन्। अकार उच्चारणार्थः॥ प्रातः प्रत्यूषः।

**अमेस्तुट् च॥ ६०॥**

अमेररन्। तस्य तुडागमः॥ अन्तर्मध्यम्॥

**दहेर्गो लोपो दश्च नः॥ ६१॥**

दहतेर्गप्रत्ययः। धातोरन्त्यलोपः। दकारस्य नकारः॥ नगः पर्वतवृक्षयोः॥ बाहुलकान्नकारस्य नाकारोऽपि। नागः सर्पविशेष इति दैववृत्तिः॥

**सिचेः संज्ञायां हनुमौ कश्च॥ ६२॥**

सिञ्चतेः संज्ञायां कप्रत्ययो धातोरन्त्यादेशश्च हकारः। धातोरेव नुम्॥ सिंहो मृगेन्द्रः। पृषोदरादित्वादाद्यन्तविपर्यये हिनस्तीति सिंह इत्यपि भवति॥

व्याङि घ्रातेस्तु जातौ ॥ ६३ ॥

व्याङ्पूर्वाज्जिघ्रतेर्जातावर्थे कप्रत्ययः । कित्वादालोपः ॥ व्याघ्रो द्वीपि ।

हन्तेरच् घुर च ॥ ६४ ॥

हन्तेरच्प्रत्ययो धातोर्घुरादेशश्च । घोरं भयानकम् ॥

क्षमेरुपधालोपश्च ॥ ६५ ॥

क्षमतेरच्प्रत्यय उपधालोपश्च ॥ क्ष्मावनिः ॥

तरतेर्ड्रिः ॥ ६६ ॥

तॄ प्लवनतरणयोः ॥ अस्माद्धातोर्ड्रिप्रत्ययः । डित्वात् टिलोपः ॥ त्रिः संख्यावाचकः । त्रयः । त्रीन् । त्रिभ्यः । त्रेस्त्रयः । पा०७,१,५३, । त्रयाणाम् । त्रिषु ॥

ग्रहेरनिः ॥ ६७ ॥

ग्रह्णातेरनिप्रत्ययः ॥ ग्रहणिर्व्याधिभेदः । कृदिकारादिति ङीषि ग्रहणीरुक् प्रवाहिकेत्यमरः ॥

प्रथेरमच् ॥ ६८ ॥

प्रथ प्रख्याने ॥ अस्मादमच्प्रत्ययः । प्रथन्ते ऽनेन द्वितीयादय इति प्रथम आद्यो ऽभिनवश्च । प्रथमचरमेति । पा० १,१,३३, । सर्वनामत्वात्पक्षे शीभावे प्रथमाः प्रथमे तिष्ठन्ति । पूर्वापरप्रथमचरमेति । पा०२,१,५८, । समासः । प्रथमवैयाकरण आद्यो वैयाकरणानां मुख्यो वा । नित्यस्वायमन्तोदात्तः । स्त्रियां प्रथमा ॥

चरेश्च ॥ ६९ ॥

चर गत्यर्थः॥ अस्मादमच्। चरमो ऽन्त्यः पश्चिमश्च। प्रथमचरमेति बहुले चरमे चरमाः। चरमवैयाकरणः॥ योगविभागप्रयोजनं चिन्त्यम्॥

मङ्गेरलच्॥ ७०॥

रखनखेत्यादिदण्डके मगिः पठ्यते॥ अस्मादलच्। मङ्गलं तु प्रशस्ते स्यात्। अर्धर्चादित्वात् द्विलिङ्गकम्। मङ्गलो ग्रहभेदः। भावे ष्यञि माङ्गल्यम्। तत्र साधुरिति यत्। मङ्गल्यं पूर्णकुम्भादाविति सुभूतिचन्द्रः। मत्वर्थे यत् प्रकरणे ऽन्यत्रापि दृश्यत इति यत्। मङ्गल्यं मङ्गले साधु मङ्गल्यश्च मसूरकः। मङ्गल्या च वचा छत्रा मल्लिगन्धागुरुस्तथेति धरणिः॥

सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमो ऽस्तु ते॥

इति महामहोपाध्यायश्रीमदुज्ज्वलदत्त विरचितायामुणादिवृत्तौ पञ्चमः पादः॥ ५॥

समाप्ता।



